# ATHARVA-VEDA SAMHITĀ

# अथर्ववेद संहिता

With English Translation
by

**Svami Satya Prakash Sarasvati**
Udaya Vir Viraj Vedalankar
Dr. Vimalesh

## Vol. 5

## Kāṇḍa XVI – XIX

## पंञ्चम भागः



## काण्ड १६ – १६



**Veda Pratishthana**

**Arya Samaj Mandir Marg**
**New Delhi - 110 001**

## Preface

The history of the Veda Pratishthana takes us back to 1973. Padma Bhushan Col. Veda Ratan Mohan, the son of Sri Narendra Mohan of the distinguished Narendra Mohan Foundations died on July 28, 1973 at an unripe age of 53, and according to the family traditions there was held a Shanti ceremony at the residence of the deceased. At this ceremony, Pandit Prakash Vir Shastry was also present.

Sri Shastry casually asked Sri Narendra Mohan, what it was that prompted the elders of the family to name this infant of theirs as Veda Ratan Mohan - evidently the name indicates a unique regard of the family to the sanctity of and reverence to the Vedas, the most ancient book of man's library.

During this conversation, Sri Prakash Vir Shastry suggested to the members of the family to undertake and subsidize some project to popularize the Vedic teachings, On behalf of the Narendra Mohan Foundations, Major Sri Kapil Mohan, the younger brother of the late Veda Ratan Mohan agreed to finance munificently this venture, and it was unanimously agreed upon to present to the public standard English translations of all the four Vedas. This is, in short, the history of the foundation of the Veda Pratishthana. Dr. Govardhan Lal Dutta, a distinguished educationist and head of the Veda Pratishthana requested Svami Satya Prakash, to undertake the Chief Editorship of the publication project and appointed Pt. Satyakam Vidyalankar to assist Svami Ji in this work. The work started immediately and the work of editing, translating and publishing the entire Ṛg-veda into thirteen decent volumes could be finished in a period of full ten years (1977-1987). These thirteen volumes cover 4938 pages.

After the sad death of Sri Prakash Vir Shastry (born 1923, died Nov. 23, 1977 in a tragic railway accident) and also of Dr. Govardhan Lal Dutta, the Veda Pratishthana has been fortunate to have Dr. L.M. Singhvi as its President. These days he has gone on his new assignment to the United Kingdom to serve as the High Commissioner for India.

The Veda Pratishthana took up the English translations of the Yajur-veda and Sāma-veda. Sri Udai Vir Viraj assisted Svami Satya Prakash in the Yajur-veda and Pandit Satyakam Vidyalankar in the translation of the Sāma-veda, but on account of certain difficulties in their printing, we shall yet take some time in presenting them to our public. We regret to announce the death of Pandit Satya Kam Vidyalankar and Sri Ram Saran Das Ahuja. Selfless devotion of Mr.Ahuja to the Pratishthana has been a matter of pride to all of us.

Svami Satya Prakash is also now 86 years old and feeble. He has left Delhi for his cottage Ṛtambhara at the Vijñana Parishad, Allahabad. The English Translation of the Atharva-veda in several books has been assisted by Sri Udayavir Viraj, a distinguished graduate of Gurukul Kangri and the printing of the Atharva-veda has been entrusted to M/s Surya Trading Corporation whose singular devotion to this work could make the entire printing possible in such a short time. We are highly indebted to Dr. Vimalesh, the Ex-Principal D.A.V. College, Allahabad for his critical and excellent assistance in this publication and to Shri Chandra Bhan Singh for the excellent typing work. We also acknowledge the assistance rendered by Shri Chandra Prakash and Shri Panna Lal in bringing out this publication.

**R.N.Sehgal**
The Veda Pratishthane
Arya Samaj, Mandir Marg
New Delhi - 110001

# अथ षोडशं काण्डम् ॥

[ १ ] प्रथमः पर्यायः

(१-१३) त्रयोदशर्चस्यास्य पर्यायस्याथर्वा ऋषिः । प्रजापतिर्देवता । (१, ३) प्रथमातृतीययोर्ऋचोर्द्विपदा साम्नी बृहती, (२, १०) द्वितीयादशम्योर्याजुषी त्रिष्टुप्, (४) चतुर्थ्या आसुरी गायत्री, (५) पञ्चम्या द्विपदा साम्नी पङ्क्तिः, (६) षष्ठ्याः साम्न्यनुष्टुप्, (७) सप्तम्या निचृद्विराड्गायत्री, (८) अष्टम्याः साम्नी पङ्क्तिः, (९) नवम्या आसुरी पङ्क्तिः, (११) एकादश्याः साम्न्युष्णिक्, (१२-१३) द्वादशीत्रयोदश्योश्चार्च्यनुष्टुप् छन्दांसि ॥

अतिसृष्टो अपां वृषभोतिसृष्टा अग्नयो दिव्याः ॥१॥
रुजन्परिरुजन्मृणन्प्रमृणन् ॥२॥
म्रोको मनोहा खनो निर्दाह आत्मदूषिस्तनूदूषिः ॥३॥
इदं तमति सृजामि तं माभ्यवनिक्षि ॥४॥
तेन तमभ्यतिसृजामो यो३स्मान्द्वेष्टि यं वयं द्विष्मः ॥५॥
अपामग्रमसि समुद्रं वोभ्यवसृजामि ॥६॥

अतिऽसृष्टः । अपाम् । वृषभः । अतिऽसृष्टाः । अग्नयः । दिव्याः ॥ १ ॥
रुजन् । परिऽरुजन् । मृणन् । प्रऽमृणन् ॥ २ ॥
म्रोकः । मनःऽहा । खनः । निःऽदाहः । आत्मऽदूषिः । तनूऽदूषिः ॥ ३ ॥
इदम् । तम् । अति । सृजामि । तम् । मा । अभिऽअवनिक्षि ॥ ४ ॥
तेन । तम् । अभिऽअतिसृजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः ॥ ५ ॥
अपाम् । अग्रम् । असि । समुद्रम् । वः । अभिऽअवसृजामि ॥ ६ ॥

PARYĀYA - I

## Prajāpati

**XVI.1.1** Sent away is the showerer of waters; sent away are the fires celestial.

**XVI.1.2** Breaking, shattering, crushing, slaughtering,

**XVI.1.3** Utterly destructive, mind-killer, digger in, burner, ruiner of soul, ruiner of body,

**XVI.1.4** Now I let him loose. May I not receive him back.

**XVI.1.5** Thereby we slay him, who hates us, (and) whom we hate.

**XVI.1.6** You are the foremost part of the waters. I let you loose towards the ocean.

योऽप्स्वन्तरग्निरति तं सृजामि म्रोकं खनिं तनूदूषिम् ॥७॥
यो व आपोऽग्निराविवेश स एष यद्वो घोरं तदेतत् ॥८॥
इन्द्रस्य व इन्द्रियेणाभि षिञ्चेत् ॥९॥
अरिप्रा आपो अप रिप्रमस्मत् ॥१०॥
प्रास्मदेनो वहन्तु प्र दुष्वप्न्यं वहन्तु ॥११॥
शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचं मे ॥१२॥
शिवानग्नीनप्सुषदो हवामहे मयि क्षत्रं वर्च आ धत्त देवीः ॥१३॥

यः । अप्ऽसु । अग्निः । अति । तम् । सृजामि । म्रोकम् । खनिम् । तनूऽदूषिम् ॥ ॥ ७ ॥
यः । वः । आपः । अग्निः । आऽविवेश । सः । एषः । यत् । वः । घोरम् । तत् । एतत् ॥८॥
इन्द्रस्य । वः । इन्द्रियेण । अभि । सिञ्चेत् ॥ ९ ॥
अरिप्राः । आपः । अप । रिप्रम् । अस्मत् ॥ १० ॥
प्र । अस्मत् । एनः । वहन्तु । प्र । दुःऽस्वप्न्यम् । वहन्तु ॥ ११ ॥
शिवेन । मा । चक्षुषा । पश्यत । आपः । शिवया । तन्वा । उप । स्पृशत । त्वचम् । मे ॥
शिवान् । अग्नीन् । अप्सुऽसदः । हवामहे । मयि । क्षत्रम् । वर्चः । आ । धत्त । देवीः ॥१३॥

**XVI.1.7** What fire is there in the waters, that, utterly destructive, digging in, ruiner of body, I hereby let loose.

**XVI.1.8** O waters, the fire, which had entered you, that is this; what is terrible of you, that is this.

**XVI.1.9** Let him anoint you with the strength of the resplendent Lord.

**XVI.1.10** O waters unpolluted, may you remove pollution away from us.(Same as X.5.24)

**XVI.1.11** May they carry away sin from us; may they carry away the evil dream.

**XVI.1.12** O waters, may you look at me with an auspicious eye; may you touch my skin with your auspicious body.

**XVI.1.13** We invoke the auspicious fires seated within the waters. May they, the divine ones, bestow ruling power and lustre on me.

[ २ ] द्वितीयः पर्यायः

(१-६) षड्‌ऋचस्यास्य पर्यायस्याथर्वा ऋषिः । वाग्देवता । (१) प्रथमर्च आसुर्यनुष्टुप्, (२) द्वितीयाया आसुर्युष्णिक्, (३) तृतीयायाः साम्न्युष्णिक्, (४) चतुर्थ्यास्त्रिपदा साम्नी बृहती, (५) पञ्चम्या आर्च्यनुष्टुप्, (६) षष्ठ्याश्च निचृद्विराड्गायत्री छन्दांसि ॥

निर्दुरर्मण्य ऊर्जा मधुमती वाक् ॥१॥
मधुमती स्थ मधुमतीं वाचमुदेयम् ॥२॥
उपहूतो मे गोपा उपहूतो गोपीथः ॥३॥
सुश्रुतौ कर्णौ भद्रश्रुतौ कर्णौ भद्रं श्लोकं श्रूयासम् ॥४॥
सुश्रुतिश्च मोपश्रुतिश्च मा हासिष्टां सौपर्णं चक्षुरजस्रं ज्योतिः ॥५॥
ऋषीणां प्रस्तरोऽसि नमोऽस्तु दैवाय प्रस्तराय ॥६॥

निः । दुःऽअर्मण्यः । ऊर्जा । मधुऽमती । वाक् ॥ १ ॥
मधुऽमतीः । स्थ । मधुऽमतीम् । वाचम् । उत्ऽदेयम् ॥ २ ॥
उपऽहूतः । मे । गोपाः । उपहूतो । गोपीथः ॥ ३ ॥
सुऽश्रुतौ । कर्णौ । भद्रऽश्रुतौ । कर्णौ । भद्रम् । श्लोकम् । श्रूयासम् ॥ ४ ॥
सुऽश्रुतिः । च । मा । उपऽश्रुतिः । च । मा । हासिष्टाम् । सौपर्णम् । चक्षुः । अजस्रम् । ज्योतिः ॥
ऋषीणाम् । प्रऽस्तरः । असि । नमः । अस्तु । दैवाय । प्रऽस्तराय ॥ ६ ॥

[ ३ ] तृतीयः पर्यायः

(१-६) षड्‌ऋचस्यास्य पर्यायस्य ब्रह्मा ऋषिः । आदित्यो देवता । (१) प्रथमर्च आसुरी गायत्री, (२-३) द्वितीयातृतीययोरार्च्यनुष्टुप्, (४) चतुर्थ्याः प्राजापत्या त्रिष्टुप्, (५) पञ्चम्याः साम्न्युष्णिक्, (६) षष्ठ्याश्च द्विपदा साम्नी त्रिष्टुप् छन्दांसि ॥

मूर्धाहं रयीणां मूर्धा समानानां भूयासम् ॥१॥

मूर्धा । अहम् । रयीणाम् । मूर्धा । समानानाम् । भूयासम् ॥ १ ॥

PARYĀYA - II

## Vāk (speech)

**XVI.2.1** Away from dirty rubbish, comes out the vigorous and honey-sweet speech.

**XVI.2.2** Full of honey you are; may I speak honey-sweet speech.

**XVI.2.3** Invoked is my protector of sense-organs; invoked is the protection.

**XVI.2.4** May my two ears be hearing good, ears hearing propitious. May I hear excellent praise.

**XVI.2.5** May not the good hearing and attentive listening desert me. May the eagles's eye, the unfailing light (be for me).

**XVI.2.6** You are the seat of the seers; homage to the seat divine.

PARYĀYA - III

## Āditya

**XVI.3.1** May I top riches; may I top my equals.

**रुजश्च मा वेनश्च मा हासिष्टां मूर्धा च मा विधर्मा च मा हासिष्टाम् ॥२॥**
**उर्वश्च मा चमसश्च मा हासिष्टां धर्ता च मा धरुणश्च मा हासिष्टाम् ॥३॥**
**विमोकश्च मार्द्रपविश्च मा हासिष्टामार्द्रदानुश्च मा मातरिश्वा च मा हासिष्टाम् ॥४॥**
**बृहस्पतिर्म आत्मा नृमणा नाम हृद्यः ॥५॥**
**असंतापं मे हृदयमुर्वी गव्यूतिः समुद्रो अस्मि विधर्मणा ॥६॥**

रुजः । च । मा । वेनः । च । मा । हासिष्टाम् । मूर्धा । च । मा । विऽधर्मा । च । मा । हासिष्टाम् ॥

उर्वः । च । मा । चमसः । च । मा । हासिष्टाम् । धर्ता । च । मा । धरुणः । च० ॥३॥

विऽमोकः । च । मा । आर्द्रऽपविः । च । मा । हासिष्टाम् । आर्द्रऽदानुः । च । मा । मातरिश्वा । च । मा । हासिष्टाम् ॥४॥

बृहस्पतिः । मे । आत्मा । नृऽमनाः । नाम । हृद्यः ॥ ५ ॥

असम्ऽतापम् । मे । हृदयम् । उर्वी । गव्यूतिः । समुद्रः । अस्मि । विऽधर्मणा ॥ ६ ॥

[ ४ ] चतुर्थः पर्यायः

(१-७) सप्तर्चस्यास्य पर्यायस्य ब्रह्मा ऋषिः । आदित्यो देवता । (१, ३) प्रथमातृतीययोर्ऋचोः साम्न्यनुष्टुप्, (२) द्वितीयायाः साम्न्युष्णिक्, (४) चतुर्थ्यास्त्रिपदानुष्टुप्, (५) पञ्चम्या आसुरी गायत्री, (६) षष्ठ्या आर्च्युष्णिक्, (७) सप्तम्याश्च त्रिपदा विराड्गर्भानुष्टुप् छन्दांसि ॥

**नाभिरहं रयीणां नाभिः समानानां भूयासम् ॥१॥**

नाभिः । अहम् । रयीणाम् । नाभिः । समानानाम् । भूयासम् ॥ १ ॥

**XVI.3.2** May lustre and desire not desert me; may the summit and circumference (vidharma) not desert me.

**XVI.3.3** May the cauldron and the ladle not desert me; may the support and the base not desert me.

**XVI.3.4** May not the (hurling) shooting and the moist arrow desert me; may not the granter of moisture and the atmospheric wind desert me.

**XVI.3.5** The Lord supreme is my self, friend of men by name, pleasing to heart.

**XVI.3.6** Free from distress is my heart; wide is my place of residence; I am ocean by circumference.

PARYĀYA - IV

## Āditya

**XVI.4.1** May I be the centre of riches; may I be the centre of my equals.

स्वासदसि सूषा अमृतो मर्त्येष्वा ॥२॥
मा मां प्राणो हासीन्मो अपानोऽवहाय परा गात् ॥३॥
सूर्यो माह्नः पात्वग्निः पृथिव्या वायुरन्तरिक्षाद्यमो मनुष्येभ्यः सरस्वती पार्थिवेभ्यः ॥४॥
प्राणापानौ मा मा हासिष्टं मा जने प्र मेषि ॥५॥
स्वस्त्य१द्योषसो दोषसश्च सर्वं आपः सर्वगणो अशीय ॥६॥
शक्वरी स्थ पशवो मोप स्थेषुर्मित्रावरुणौ मे प्राणापानावग्निर्मे दक्षं दधातु ॥७॥

सुऽआसत् । असि । सुऽउषाः । अमृतः । मर्त्येषु । आ ॥ २ ॥

मा । माम् । प्राणः । हासीत् । मो इति । अपानः । अवऽहाय । परा । गात् ॥ ३ ॥

सूर्यः । मा । अह्नः । पातु । अग्निः । पृथिव्याः । वायुः । अन्तरिक्षात् । यमः । मनुष्येभ्यः । सरस्वती । पार्थिवेभ्यः ॥ ४ ॥

प्राणापानौ । मा । मा । हासिष्टम् । मा । जने । प्र । मेषि ॥ ५ ॥

स्वस्ति । अद्य । उषसः । दोषसः । च । सर्वः । आपः । सर्वऽगणः । अशीय ॥६॥

शक्वरीः । स्थ । पशवः । मा । उप । स्थेषुः । मित्रावरुणौ । मे । प्राणापानौ । अग्निः । मे । दक्षम् । दधातु ॥ ७ ॥

[५] पञ्चमः पर्यायः

(१-१०) दशर्चस्यास्य पर्यायस्य यम ऋषिः । दुःस्वप्ननाशनं देवता । [१, ४-६ (१)] प्रथमर्चश्चतुर्थ्यादितृचस्य प्रथमावसानर्चाश्च विराड्गायत्री, [२, ४-७ (२), ९] द्वितीयायाश्चतुर्थ्यादिचतुर्द्वितीयावसानर्चा नवम्याश्च प्राजापत्या गायत्री, [३, ४-७ (३), १०] तृतीयायाश्चतुर्थ्यादिचतुस्तृतीयावसानर्चा दशम्याश्च द्विपदा साम्नी बृहती, [७(१)] सप्तम्याः प्रथमावसानर्चो भुरिग्विराड्गायत्री, (८) अष्टम्याश्च स्वराड्विराड्गायत्री छन्दांसि ॥

विद्म ते स्वप्न जनित्रं ग्राह्याः पुत्रोऽसि यमस्य करणः ॥१॥

विद्म । ते । स्वप्न । जनित्रम् । ग्राह्याः । पुत्रः । असि । यमस्य । करणः ॥ १ ॥

**XVI.4.2** You are self-seated, enjoyer of good dawn, an immortal among mortals.

**XVI.4.3** May in-breath not desert me; may out-breath also not go away deserting me.

**XVI.4.4** May the sun protect me from sky (ahnah), the fire from earth, the wind from midspace, the controller Lord from men and the speech from kings.

**XVI.4.5** May both, the in-breath and the out-breath, not desert me. May I not be killed by man.

**XVI.4.6** May the dawns and dusks be auspicious today. May I enjoy waters with all my people hail and hearty.

**XVI.4.7** Cows you are. May the cattle come to me. May the Lord friendly and venerable preserve my in-breath and out-breath. May the adorable Lord grant me dexterity.

PARYĀYA - V

## Against evil dreams

**XVI.5.1** O dream, we know your place of origin; you are son of gripping disease; an instrument of the Controller Lord.

अन्तकोसि मृत्युरसि ॥२॥

तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात्पाहि ॥३॥

विद्म ते स्वप्न जनित्रं निर्ऋत्याः पुत्रोऽसि यमस्य करणः ।
अन्तकोसि मृत्युरसि । तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात्पाहि ॥४॥

विद्म ते स्वप्न जनित्रमभूत्याः पुत्रोऽसि यमस्य करणः ।
अन्तकोसि मृत्युरसि । तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात्पाहि ॥५॥

विद्म ते स्वप्न जनित्रं निर्भूत्याः पुत्रोऽसि यमस्य करणः ।
अन्तकोसि मृत्युरसि । तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात्पाहि ॥६॥

विद्म ते स्वप्न जनित्रं पराभूत्याः पुत्रोऽसि यमस्य करणः ।
अन्तकोसि मृत्युरसि । तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात्पाहि ॥७॥

विद्म ते स्वप्न जनित्रं देवजामीनां पुत्रोऽसि यमस्य करणः ॥८॥

अन्तकः । असि । मृत्युः । असि ॥ २ ॥

तम् । त्वा । स्वप्न । तथा । सम् । विद्म । सः । नः । स्वप्न । दुःऽस्वप्न्यात् । पाहि ॥

विद्म । ते । स्वप्न । जनित्रम् । निःऽऋत्याः । पत्रः ।०। ०॥ ४ ॥

विद्म । ते । स्वप्न । जनित्रम् । अभूत्याः । पुत्रः ।० ।०॥ ५ ।

विद्म । ते । स्वप्न । जनित्रम् । निःऽभूत्याः । पुत्रः ।० ।०॥ ६ ॥

विद्म । ते । स्वप्न । जनित्रम् । पराऽभूत्याः । पुत्रः ।० ।०॥ ७ ॥

विद्म । ते । स्वप्नं । जनित्रम् । देवऽजामीनाम् । पुत्रः । असि । यमस्य । करणः ॥ ८ ॥

**XVI.5.2** You are the ender; you are death.

**XVI.5.3** As such, O dream, we come to an agreement with you. May you, as such, O dream, shield us from the evil dream.

**XVI.5.4** O dream, we know your place of origin; you are son of misery; an instrument of the Controller Lord. You are the ender; you are death. As such, O dream, we come to an agreement with you. May you, as such, O dream, shield us from the evil dream.

**XVI.5.5** O dream, we know your place of origin; you are son of poverty; an instrument of the Controller Lord. You are the ender; you are death. As such, O dream, we come, to an agreement with you. May you, as such, O dream, shield us from the evil dream.

**XVI.5.6** O dream, we know your place of origin; you are son of the loss of wealth; an instrument of the Controller Lord. You are the ender; you are death. As such, O dream, we come, to an agreement with you. May you, as such, O dream, shield us from the evil dream.

**XVI.5.7** O dream, we know your place of origin; you are son of defeat; an instrument of the Controller Lord. You are the ender; you are death. As such, O dream, we come to an agreement with you. May you, as such, O dream, shield us from the evil dream.

**XVI.5.8** O dream, we know your place of origin; you are son of perverted senses (devajāmī); an instrument of the Controller Lord.

**अन्तकोसि मृत्युरसि ॥९॥**
**तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात्पाहि ॥१०॥**

अन्तकः । असि । मृत्युः । असि ॥ ९ ॥

तम् । त्वा । स्वप्न । तथा । सम् । विद्म । सः । नः । स्वप्न । दुःऽस्वप्न्यात् । पाहि ॥

[ ६ ] षष्ठः पर्यायः

(१-११) एकादशर्चस्यास्य पर्यायस्य यम ऋषिः । उषा देवता । (१-४) प्रथमादिचतसृणामृचां प्राजापत्यानुष्टुप्, (५) पञ्चम्याः साम्नी पङ्क्तिः, (६) षष्ठ्या निचृदार्षी बृहती, (७) सप्तम्या द्विपदा साम्नी बृहती, (८) अष्टम्या आसुरी जगती, (९) नवम्या आसुरी बृहती, (१०) दशम्या आर्च्युष्णिक्, (११) एकादश्याश्च त्रिपदा यवमध्या गायत्री आर्च्यनुष्टुब्वा छन्दांसि ॥

**अजैष्माद्यासनामाद्याभूमानागसो वयम् ॥१॥**
**उषो यस्माद्दुष्वप्न्यादभैष्माप तदुच्छतु ॥२॥**
**द्विषते तत्परा वह शपते तत्परा वह ॥३॥**
**यं द्विष्मो यश्च नो द्वेष्टि तस्मा एनद्गमयामः ॥४॥**
**उषा देवी वाचा संविदाना वाग्देव्युषसा संविदाना ॥५॥**

अजैष्म । अद्य । असनाम । अद्य । अभूम । अनागसः । वयम् ॥ १ ॥

उषः । यस्मात् । दुःऽस्वप्न्यात् । अभैष्म । अप । तत् । उच्छतु ॥ २ ॥

द्विषते । तत् । परा । वह । शपते । तत् । परा । वह ॥ ३ ॥

यम् । द्विष्मः । यः । च । नः । द्वेष्टि । तस्मै । एनत् । गमयामः ॥ ४ ॥

उषाः । देवी । वाचा । सम्ऽविदाना । वाक् । देवी । उषसा । सम्ऽविदाना ॥ ५ ॥

**XVI.5.9** You are the ender; you are death. (Same as XVI.5.2)

**XVI.5.10** As such, O dream, we come to an agreement with you. May you as such, O dream, shield us from the evil dream. (Same as XVI.5.3)

PARYĀYA - VI

## Charm to avert evil dreams

**XVI.6.1** We have won today; we have been successful today; we have become free from guile.

**XVI.6.2** From which evil dream we have been afraid, may the dawn dispel that away.

**XVI.6.3** May you carry it away to him, who hates; may you carry it away to him, who curses.

**XVI.6.4** Whom we hate, and who also hates us, to him we make it go.

**XVI.6.5** May the divine dawn in concord with the speech, and the divine speech in concord with the dawn;

उषस्पतिर्वाचस्पतिना संविदानो वाचस्पतिरुषस्पतिना संविदानः ॥६॥
तेऽमुष्मै परा वहन्त्वरायान्दुर्णाम्नः सदान्वाः ॥७॥
कुम्भीका दूषीकाः पीयकान् ॥८॥
जाग्रद्दुष्वप्न्यं स्वप्नेदुष्वप्न्यम् ॥९॥
अनागमिष्यतो वरानवित्तेः संकल्पानमुच्या द्रुहः पाशान् ॥१०॥
तदमुष्मा अग्ने देवाः परा वहन्तु वध्रिर्यथासद्विथुरो न साधुः ॥११॥

उषः । पतिः । वाचः । पतिना । सम्ऽविदानः । वाचः । पतिः । उषः । पतिना । सम्ऽविदानः ॥

ते । अमुष्मै । परा । वहन्तु । अरायान् । दुःऽनाम्नः । सदान्वाः ॥ ७ ॥

कुम्भीकाः । दूषीकाः । पीयकान् ॥ ८ ॥

जाग्रत्ऽदुस्वप्न्यम् । स्वप्नेऽदुस्वप्न्यम्' ॥ ९ ॥

अनागमिष्यतः । वरान् । अवित्तेः । सम्ऽकल्पान् । अमुच्याः । द्रुहः । पाशान् ॥१०॥

तत् । अमुष्मै । अग्ने । देवाः । परा । वहन्तु । वध्रिः । यथा । असत् । विथुरः । न । साधुः ॥

[ ७ ] सप्तमः पर्यायः

(१-१३) त्रयोदशर्चस्यास्य पर्यायस्य यम ऋषिः । दुःस्वप्ननाशनं देवता । (१) प्रथमर्चः पङ्क्तिः, (२) द्वितीयायाः साम्न्यनुष्टुप्, (३) तृतीयाया आसुर्युष्णिक्, (४) चतुर्थ्याः प्राजापत्या गायत्री, (५) पञ्चम्या आर्च्युष्णिक्, (६, ९, ११) षष्ठीनवम्येकादशीनां साम्नी बृहती, (७) सप्तम्या याजुषी गायत्री, (८) अष्टम्याः प्राजापत्या बृहती, (१०) दशम्याः साम्नी गायत्री, (१२) द्वादश्या भुरिक् प्राजापत्यानुष्टुप्, (१३) त्रयोदश्याश्चासुरी त्रिष्टुप् छन्दांसि ॥

तेनैनं विध्याम्यभूत्यैनं विध्यामि निर्भूत्यैनं विध्यामि
पराभूत्यैनं विध्यामि ग्राह्यैनं विध्यामि तमसैनं विध्यामि ॥१॥

तेन । एनम् । विध्यामि । अभूत्या । एनम् । विध्यामि । निःऽभूत्या । एनम् । विध्यामि ।
पराऽभूत्या । एनम् । विध्यामि । ग्राह्या । एनम् । विध्यामि । तमसा । एनम् । विध्यामि ॥ १ ॥

**XVI.6.6** may the Lord of dawn in concord with the Lord of speech, and the Lord of speech in concord with the Lord of dawn;

**XVI.6.7** may they carry away to so and so the miseries, evil-named diseases (piles) and ever-crying pains (sadanvās);

**XVI.6.8** eye-troubles (kumbhikā), malignant and septic diseases;

**XVI.6.9** evil dreaming while awake, evil dreaming while asleep;

**XVI.6.10** blessing that will never come true, wishes that will be fulfilled, and the nooses of hatred that will never be released;

**XVI.6.11** all this, O adorable Lord, may the bounties of Nature carry away to so and so, so that he may become impotent, suffering from pain and not in good shape.

PARYĀYA - VII

## An imprecation on an enemy

**XVI.7.1** With that I pierce this man; I pierce him with poverty; I pierce him with loss of wealth; I pierce him with defeat; I pierce him with gripping disease; I pierce him with darkness.

देवानामेनं घोरैः क्रूरैः प्रैषैरभिप्रेष्यामि ॥२॥
वैश्वानरस्यैनं दंष्ट्रयोरपि दधामि ॥३॥
एवानेवाव सा गरत् ॥४॥
यो३स्मान्द्वेष्टि तमात्मा द्वेष्टु यं वयं द्विष्मः स आत्मानं द्वेष्टु ॥५॥
निर्द्विषन्तं दिवो निः पृथिव्या निरन्तरिक्षाद्भजाम ॥६॥
सुयामंश्चाक्षुष ॥७॥
इदमहमामुष्यायणे३मुष्याः पुत्रे दुष्वप्न्यं मृजे ॥८॥
यददोअदो अभ्यगच्छन्यद्दोषा यत्पूर्वां रात्रिम् ॥९॥
यज्जाग्रद्यत्सुप्तो यद्दिवा यन्नक्तम् ॥१०॥

देवानाम् । एनम् । घोरैः । क्रूरैः । प्रऽएषैः । अभिऽप्रेष्यामि ॥ २ ॥

वैश्वानरस्य । एनम् । दंष्ट्रयोः । अपि । दधामि ॥ ३ ॥

एव । अनेव । अव । सा । गरत् ॥ ४ ॥

यः । अस्मान् । द्वेष्टि । तम् । आत्मा । द्वेष्टु । यम् । वयम् । द्विष्मः । सः । आत्मानम् । द्वेष्टु ॥

निः । द्विषन्तम् । दिवः । निः । पृथिव्याः । निः । अन्तरिक्षात् । भजाम ॥ ६ ॥

सुऽयामन् । चाक्षुष ॥ ७ ॥

इदम् । अहम् । आमुष्यायणे । अमुष्याः । पुत्रे । दुःऽस्वप्न्यम् । मृजे ॥ ८ ॥

यत् । अदःऽअदः । अभिऽअगच्छम् । यत् । दोषा । यत् । पूर्वाम् । रात्रिम् ॥ ९ ॥

यत् । जाग्रत् । यत् । सुप्तः । यत् । दिवा । यत् । नक्तम् ॥ १० ॥

**XVI.7.2** I summon him through the terrible and cruel messengers of the bounties of Nature.

**XVI.7.3** I put him between the two jaws of the benefactor of all men.

**XVI.7.4** This way or that way, may she (the calamity) swallow him down.

**XVI.7.5** Whoever hates us, may his own self hate him; may he, whom we hate, hate his own self.

**XVI.7.6** Out of heave, out of earth and out of midspace we drive away the hater.

**XVI.7.7** O excellent controller, son of vision,

**XVI.7.8** I, hereby, send an evil dream unto him, descendant of so and so, the son of so and so mother.

**XVI.7.9** What (faults), this and that, I have found, what at dusk, what in the early night;

**XVI.7.10** what while awake, what while asleep, what by day, what by night;

यदहरहरभिगच्छामि तस्मादेनमव दये ॥११॥
तं जहि तेन मन्दस्व तस्य पृष्टीरपि शृणीहि ॥१२॥
स मा जीवीत्तं प्राणो जहातु ॥१३॥

यत् । अहःऽअहः । अभिऽगच्छामि । तस्मात् । एनम् । अव । दये ॥ ११ ॥
तम् । जहि । तेन । मन्दस्व । तस्य । पृष्टीः[1] । अपि । शृणीहि ॥ १२ ॥
सः । मा । जीवीत् । तम् । प्राणः । जहातु ॥ १३ ॥

[ ८ ] अष्टमः पर्यायः

(१-३३) त्रयस्त्रिंशदृचस्यास्य पर्यायस्य यम ऋषिः । दुःस्वप्ननाशनं देवता । [१, ५-२९ (१), ३०] प्रथमर्चः पञ्चम्यादि-पञ्चविंशतेः प्रथमावसानर्चां त्रिंश्याश्चैकपदा यजुर्ब्राह्म्यनुष्टुप्, [२, ५-२९ (२), ३१] द्वितीयायाः पञ्चम्यादिपञ्चविंशतेर्द्वितीयावसानर्चामेकत्रिंश्याश्च त्रिपदा निचृद्गायत्री, (३) तृतीयायाः प्राजापत्या गायत्री, [४, ५-२९ (४), ३२] चतुर्थ्याः पञ्चम्यादिपञ्चविंशतेश्चतुर्थावसानर्चां त्रयस्त्रिंश्याश्च त्रिपदा प्राजापत्या त्रिष्टुप्, [५-७ (३), १२ (३), २० (३), २२ (३), २७ (३)] पञ्चम्यादितृचस्य द्वादशीविंशीद्वाविंशीसप्तविंशीनाञ्च तृतीयावसानर्चामासुरी जगती, [८ (३), १०-११ (३), १३-१४ (३), १६ (३), २१ (३)] अष्टमीदशम्येकादशीत्रयोदशीचतुर्दशीषोडश्येकविंशीनां तृतीयावसानर्चामासुरी त्रिष्टुप्, [९ (३), १५ (३), १७-१९ (३), २३-२६ (३), ३२] नवमीपञ्चदश्योः सप्तदश्यादितृचस्य त्रयोविंश्यादिचतसृणाञ्च तृतीयावसानर्चां द्वात्रिंश्याश्चासुरी पङ्क्तिः, [२८-२९ (३)] अष्टाविंश्येकोनत्रिंश्योश्च तृतीयावसानर्चोरासुरी बृहती छन्दांसि ॥

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥१॥
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥२॥
स ग्राह्याः पाशान्मा मोचि ॥३॥
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥४॥

जितम् । अस्माकम् । उत्ऽभिन्नम् । अस्माकम् । ऋतम् । अस्माकम् । तेजः । अस्माकम् । ब्रह्म । अस्माकम् । स्वः । अस्माकम् । यज्ञः । अस्माकम् । पशवः । अस्माकम् । प्रऽजाः । अस्माकम् । वीराः । अस्माकम् ॥ १ ॥
तस्मात् । अमुम् । निः । भजामः । अमुम् । आमुष्यायणम् । अमुष्याः । पुत्रम् । असौ । यः ॥
सः । ग्राह्याः । पाशात् । मा । मोचि ॥ ३ ॥
तस्य । इदम् । वर्चः । तेजः । प्राणम् । आयुः । नि । वेष्टयामि । इदम । एनम् । अधराञ्चम् । पादयामि ॥ ४ ॥

**XVI.7.11** what I find day in and day out, therefrom I cut him off.

**XVI.7.12** Strike him down. Rejoice in it. Crush his ribs also.

**XVI.7.13** May he not live; may the vital breath quit him. (part of Av. X.5.25)

### PARYĀYA - VIII

**XVI.8.1** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons.

**XVI.8.2** From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one.

**XVI.8.3** May he not be freed from the noose of the gripping disease (paralysis).

**XVI.8.4** Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं स्वरिस्माकं
यज्ञो३स्माकं पशवोस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स निर्ऋत्याः पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥५॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं स्वरिस्माकं
यज्ञो३स्माकं पशवोस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
सोभूत्याः पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥६॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं स्वरिस्माकं
यज्ञो३स्माकं पशवोस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स निर्भूत्याः पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥७॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं स्वरिस्माकं
यज्ञो३स्माकं पशवोस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स पराभूत्याः पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥८॥

०।०। सः । निःऽऋत्याः । पाशात् ।० ॥ ५ ॥

०।०। सः । अभूत्याः । पाशात् । ०॥ ६ ॥

०।० । सः । निःऽभूत्याः । पाशात् ।० ॥ ७ ॥

०।० । सः । पराऽभूत्याः । पाशात् ।० ॥ ८ ॥

**XVI.8.5** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be freed from the noose of misery. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.6** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be freed from the noose of poverty. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.7** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be freed from the noose of loss of wealth. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.8** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be freed from the noose of defeat. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३स्माकं पशवोस्माकं प्रजा अस्माकं वीरा अस्माकम्।
तस्मादमुं निर्भजामोमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स देवजामीनां पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥९॥

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३स्माकं पशवोस्माकं प्रजा अस्माकं वीरा अस्माकम्।
तस्मादमुं निर्भजामोमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स बृहस्पतेः पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥१०॥

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३स्माकं पशवोस्माकं प्रजा अस्माकं वीरा अस्माकम्।
तस्मादमुं निर्भजामोमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स प्रजापतेः पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥११॥

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३स्माकं पशवोस्माकं प्रजा अस्माकं वीरा अस्माकम्।
तस्मादमुं निर्भजामोमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स ऋषीणां पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥१२॥

०।० । सः । देवऽजामीनाम् । पाशात् ।० ॥ ९ ॥

०।० । सः । बृहस्पतेः । पाशात् ।० ॥ १० ॥

०।० । सः । प्रजाऽपतेः । पाशात् ।० ॥११॥

०।० । सः । ऋषीणाम्[२] । पाशात् ।० ॥ १२ ॥

**XVI.8.9** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the perverted sense-organs (devajāmī). Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.10** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the Lord of knowledge. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.11** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the Lord of creatures. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.12** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the seers. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स आर्षेयाणां पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥१३॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
सोऽङ्गिरसां पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥१४॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स आङ्गिरसानां पाशान्मा मोचि । ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥१५॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
सोऽथर्वणां पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥१६॥

०।० । सः । आर्षेयाणाम् । पाशात् ।० ॥ १३ ॥

०।० । सः । अङ्गिरसाम् । पाशात् ।० ॥ १४ ॥

०।० । सः । आङ्गिरसानाम् । पाशात् ।० ॥ १५ ॥

०।० । सः । अथर्वणाम् । पाशात् ।० ॥ १६ ॥

**XVI.8.13** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the descendants of seers. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.14** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the brilliant austere sages. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.15** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the descendants of the brilliant austere sages. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.16** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the seekers of the supreme. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स आथर्वणानां पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥१७॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स वनस्पतीनां पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥१८॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स वानस्पत्यानां पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥१९॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स ऋतूनां पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥२०॥

०।० । सः । आथर्वणानाम् । पाशात् ।० ॥ १७ ॥

०।० । सः । वनस्पतीनाम् । पाशात् ।० ॥ १८ ॥

०।०। सः । वानस्पत्यानाम् । पाशात् ।० ॥ १९ ॥

०।० । सः । ऋतुनाम् । पाशात् । ० ॥ २० ॥

**XVI.8.17** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the descendants of the seekers of the supreme. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.18** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the lords of the forests. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.19** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the descendants of the lords of the forests. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.20** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the seasons. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स आर्तवानां पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥२१॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स मासानां पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥२२॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
सोऽर्धमासानां पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥२३॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
सोऽहोरात्रयोः पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥२४॥ (२१)

०।०। सः । आर्तवानाम् । पाशात् ।० ॥ २१ ॥

०।०। सः । मासानाम् । पाशात् ।० ॥ २२ ॥

०।०। सः । अर्धऽमासानाम् । पाशात् ।० ॥ २३ ॥

०।०। सः । अहोरात्रयोः । पाशात् ।० ॥ २४ ॥

**XVI.8.21** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the groups of the seasons. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.22** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the months. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.23** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the half-months. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.24** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the day and night. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
सोऽह्नोः संयतोः पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥२५॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स द्यावापृथिव्योः पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥२६॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स इन्द्राग्न्योः पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥२७॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स मित्रावरुणयोः पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥२८॥

०।०। सः । अह्नोः । सम्ऽयतोः । पाशात् ।० ॥ २५ ॥

०।०। सः । द्यावापृथिव्योः । पाशात् ।० ॥ २६ ॥

०।०। सः । इन्द्राग्न्योः । पाशात् ।० ॥ २७ ॥

०।०। सः । मित्रावरुणयोः । पाशात् ।० ॥ २८ ॥

**XVI.8.25** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the two days tied together. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.26** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the heaven and earth. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.27** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the Lord resplendent and adorable. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.28** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the Lord friendly and venerable. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।
स राज्ञो वरुणस्य पाशान्मा मोचि ।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥२९॥
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥३०॥
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥३१॥
स मृत्योः पड्वीशात्पाशान्मा मोचि ॥३२॥
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥३३॥

०।०। सः । राज्ञः । वरुणस्य । पाशात् ।० ॥ २९ ॥

जितम् । अस्माकम् । ऋतम् । अस्माकम् । तेजः । अस्माकम् । ब्रह्म । अस्माकम् । स्वः । अस्माकम् । यज्ञः । अस्माकम् । पशवः । अस्माकम् । प्रऽजाः । अस्माकम् । वीराः । अस्माकम् ॥ ३० ॥

तस्मात् । अमुम् । निः । भजामः । अमुम् । आमुष्यायणम् । अमुष्याः । पुत्रम् । असौ । यः ॥

सः । मृत्योः । पड्वीशात् । पाशात् । मा । मोचि ॥ ३२ ॥

तस्य । इदम् । वर्चः । तेजः । प्राणम् । आयुः । नि । वेष्टयामि । इदम् । एनम् । अधराञ्चम् । पादयामि ॥ ३३ ॥

[ ९ ] नवमः पर्यायः

(१-४) चतुर्ऋचस्यास्य पर्यायस्य यम ऋषिः । (१) प्रथमर्चः प्रजापतिः, (२) द्वितीयाया मन्त्रोक्ताः, (३-४) तृतीया-चतुर्थ्योश्च सूर्यो देवताः । (१) प्रथमाया आर्च्यनुष्टुप्, (२) द्वितीयाया आर्च्युष्णिक्, (३) तृतीयायाः साम्नी पङ्क्तिः, (४) चतुर्थ्याश्च परोष्णिक् छन्दांसि ॥

जितमस्माकमुद्भिन्नमस्माकमभ्यष्ठां विश्वाः पृतना अरातीः ॥१॥

जितम् । अस्माकम् । उत्ऽभिन्नम् । अस्माकम् । अभि । अस्थाम् । विश्वाः । पृतनाः । अरातीः ॥

**XVI.8.29** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one. May he not be released from the noose of the venerable king. Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

**XVI.8.30** Ours be the conquest; ours the rise up; ours the righteousness; ours the brilliance; ours the knowledge; ours the bliss; ours the sacrifice; ours the cattle; ours the progeny; ours be the heroic sons. (Same as XVI.8.1)

**XVI.8.31** From sharing that we exclude so and so, the descendant of so and so, the son of so and so mother, that yonder one.

**XVI.8.32** May he not be freed from the fetter, from the noose of death.

**XVI.8.33** Now I wrap up his lustre, brilliance, vital breath and life-span. Here I make him fall down below.

PARYĀYA - IX

## To Secure Wealth

**XVI.9.1** Ours be the conquest; ours be the rise-up. May I withstand all the enemy hordes.

तदुग्निराह तदु सोम आह पूषा मा धात्सुकृतस्य लोके ॥२॥
अगन्म स्वः स्वरगन्म सं सूर्यस्य ज्योतिषागन्म ॥३॥
वस्योभूयाय वसुमान्यज्ञो वसु वंशिषीय वसुमान्भूयासं वसु मयि धेहि ॥४॥

तत् । अग्निः । आह । तत् । ऊं इति । सोमः । आह । पूषा । मा । धात् । सुऽकृतस्य । लोके ॥२॥

अगन्म । स्वः । स्वः । अगन्म । सम् । सूर्यस्य । ज्योतिषा । अगन्म ॥ ३ ॥

वस्यःऽभूयाय । वसुऽमान् । यज्ञः । वसु । वंसिषीय । वसुऽमान् । भूयासम् । वसु । मयि । धेहि ॥

॥ इति षोडशं काण्डम् ॥

[ पर्यायाः ९, ऋचः १०३ ]

**XVI.9.2** The adorable Lord says so; the blissful Lord also says so. May the nourisher Lord set me in the world of virtuous.

**XVI.9.3** We have attained light; we have attained bliss. We are united with the light of the sun.

**XVI.9.4** For increase in wealth is the wealth-bestowing sacrifice. May I obtain wealth. May I become wealthy. Bestow wealth on me.

-----------------------

**Here ends Kāṇḍa XVI**
**Hymns 9, Verses 103**

-------------------------

# अथ सप्तदशं काण्डम् ॥

### ( १ ) प्रथमं सूक्तम्

(१-३०) त्रिंशदृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः। आदित्यो देवता। (१) प्रथमर्चस्त्र्यवसाना षट्पदा जगती, (२-५) द्वितीयादिचतसृणां त्र्यवसाना षट्पदातिजगती, (६-७) षष्ठीसप्तम्योस्त्र्यवसाना सप्तपदात्यष्टिः, (८) अष्टम्यास्त्र्यवसाना सप्तपदातिधृतिः, (९, १४-१५) नवमीचतुर्दशीपञ्चदशीनां पञ्चपदा शक्वरी, (१०) दशम्यास्त्र्यवसानाष्टपदा धृतिः, (११, १६) एकादशीषोडश्योस्त्र्यवसाना सप्तपदातिधृतिः, (१२) द्वादश्यास्त्र्यवसाना सप्तपदा कृतिः, (१३) त्रयोदश्यास्त्र्यवसाना सप्तपदा प्रकृतिः, (१७) सप्तदश्याः पञ्चपदा विराडतिशक्वरी, (१८) अष्टादश्यास्त्र्यवसाना सप्तपदा भुरिगष्टिः, (१९) एकोनविंश्यास्त्र्यवसाना सप्तपदात्यष्टिः, (२०) विंश्याः ककुप्, (२१) एकविंश्याश्चतुष्पदोपरिष्टाद्बृहती, (२२) द्वाविंश्या द्विपदानुष्टुप्, (२३) त्रयोविंश्या द्विपदा निचृद्बृहती, (२४) चतुर्विंश्यास्त्र्यवसाना सप्तपदा विराडत्यष्टिः, (२५-२६) पञ्चविंशीषड्विंश्योरनुष्टुप्, (२७, ३०) सप्तविंशीत्रिंश्योर्जगती, (२८-२९) अष्टाविंश्येकोनत्रिंश्योश्च त्रिष्टुप् छन्दांसि ॥

विषासहिं सहमानं सासहानं सहीयांसम् ।
सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व इन्द्रमायुष्मान्भूयासम् ॥१॥
विषासहिं सहमानं सासहानं सहीयांसम् ।
सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व इन्द्रं प्रियो देवानां भूयासम् ॥२॥

विऽससहिम् । सहमानम् । ससहानम् । सहीयांसम् ।
सहमानम् । सहःऽजितम् । स्वःऽजितम् । गोऽजितम् । संधनऽजितम् ।
ईड्यम् । नाम । ह्वे । इन्द्रम् । आयुष्मान् । भूयासम् ॥ १ ॥
विऽससहिम् । सहमानम् । ससहानम् । सहीयांसम् ।
सहमानम् । सहःऽजितम् । स्वःऽजितम् । गोऽजितम् । संधनऽजितम् ।
ईड्यम् । नाम । ह्वे । इन्द्रम् । प्रियः । देवानाम् । भूयासम् ॥ २ ॥

**Prayer and praise to Indra and the Sun**

**XVII.1.1** I invoke the resplendent Lord of praiseworthy name, full of extra-ordinary might, the withstander, the subduer, always more powerful, the withstander, winner of might, winner of bliss, winner of kine and winner of accumulated wealth. May I have a long life-span.

**XVII.1.2** I invoke the resplendent Lord of praise-worthy name, full of extra-ordinary might, the withstander, the subduer, always more powerful, the withstander, winner of might, winner of bliss, winner of kine and winner of accumulated wealth. May I become dear to the enlightened ones.

विषासहिं सहमानं सासहानं सहीयांसम् ।
सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व इन्द्रं प्रियः प्रजानां भूयासम् ॥३॥
विषासहिं सहमानं सासहानं सहीयांसम् ।
सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व इन्द्रं प्रियः पशूनां भूयासम् ॥४॥
विषासहिं सहमानं सासहानं सहीयांसम् ।
सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व इन्द्रं प्रियः समानानां भूयासम् ॥५॥
उदिह्युदिहि सूर्य वर्चसा माभ्युदिहि ।
द्विषंश्च मह्यं रध्यतु मा चाहं द्विषते रधं तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥६॥

विऽससहिम् । सहमानम् । ससहानम् । सहीयांसम् ।
सहमानम् । सहःऽजितम् । स्वःऽजितम् । गोऽजितम् । संधनऽजितम् ।
ईडयम् । नाम । ह्वे । इन्द्रम् । प्रियः । प्रऽजानाम् । भूयासम् ॥ ३ ॥
विऽससहिम् । सहमानम् । ससहानम् । सहीयांसम् ।
सहमानम् । सहःऽजितम् । स्वःऽजितम् । गोऽजितम् । संधनऽजितम् ।
ईड्यम् । नाम । ह्वे । इन्द्रम् । प्रियः । पशूनाम् । भूयासम् ॥ ४ ॥
विऽससहिम् । सहमानम् । ससहानम् । सहीयांसम् । सहमानम् । सहःऽजितम् । स्वःऽजितम् ।
गोऽजितम् । संधनऽजितम् । ईड्यम् । नाम । ह्वे । इन्द्रम् । प्रियः । समानानाम् । भूयासम् ॥
उत् । इहि । उत् । इहि । सूर्य । वर्चसा । मा । अभिऽउदिहि । द्विषन् । च । मह्यम् ।
रध्यतु । मा । च । अहम् । द्विषते । रधम् । तव । इत् । विष्णो इति । बहुऽधा । वी-
र्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि ।
परमे । विऽओमन् ॥ ६ ॥

**XVII.1.3** I invoke the resplendent Lord of praise-worthy name, full of extra-ordinary might, the withstander, the subduer, always more powerful, the withstander, winner of might, winner of bliss, winner of kine and winner of accumulated wealth. May I become dear to people.



**XVII.1.4** I invoke the resplendent Lord of praise-worthy name, full of extra-ordinary might, the withstander, the subduer, always more powerful, the withstander, winner of might, winner of bliss, winner of kine and winner of accumulated wealth. May I become dear to animals.



**XVII.1.5** I invoke the resplendent Lord of praise-worthy name, full of extra-ordinary might, the withstander,the subduer, always more powerful, the withstander, winner of might, winner of bliss, winner of kine and winner of accumulated wealth. May I become dear to my equals.

**XVII.1.6** Rise O sun, rise up for me with lustre. May my hater be subjugate to me, and may I not be subjugated to my hater. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

उदिग्रुदिहि सूर्य वर्चसा माभ्युदिहि ।
यांश्च पश्यामि यांश्च न तेषु मा सुमतिं कृधि तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमिन् ॥७॥
मा त्वा दभन्त्सलिले अप्स्वन्तर्ये पाशिन उपतिष्ठन्त्यत्र ।
हित्वाशस्तिं दिवमारुक्ष एतां स नो मृड सुमतौ ते स्याम तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमिन् ॥८॥
त्वं न इन्द्र महते सौभगायादब्धेभिः परि पाह्यक्तुभिस्तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमिन् ॥९॥
त्वं न इन्द्रोतिभिः शिवाभिः शंतमो भव ।
आरोहंस्त्रिदिवं दिवो गृणानः सोमपीतये प्रियधामा स्वस्तये तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमिन् ॥१०॥

उत् । इहि । उत् । इहि । सूर्य । वर्चसा । मा । अभिऽउदिहि । यान् । च । पश्यामि ।
यान् । च । न । तेषु । मा । सुऽमतिम् । कृधि । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि ।
त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥७॥

मा । त्वा । दभन् । सलिले । अप्ऽसु । अन्तः । ये । पाशिनः । उपऽतिष्ठन्ति । अत्र ।
हित्वा । अशस्तिम् । दिवम् । आ । अरुक्षः । एताम् । सः । नः । मृड । सुऽमतौ । ते ।
स्याम । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि ।
पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ ८ ॥

त्वम् । नः । इन्द्र । महते । सौभगाय । अदब्धेभिः । परि । पाहि । अक्तुऽभिः । तव ।
इत् । विष्णो इति । बहुऽधा । वीर्याणि ।
त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥

त्वम् । नः । इन्द्र । ऊतिऽभिः । शिवाभिः । शम्ऽतमः । भव । आऽरोहन् ।
त्रिऽदिवम् । दिवः । गृणानः । सोमऽपीतये । प्रियऽधामा । स्वस्तये । तव । इत् ।
विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः ।
सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ १० ॥

**XVII.1.7** Rise O sun, rise. Rise up for me with lustre. Among those, whom I see and those, whom I do not see, may you cultivate friendship for me. O pervading Lord, mainfold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

**XVII.1.8** May they, who with nets await here within the waters, injure you in the flood. Freed from all ill-fame, may you ascend to this heaven. As such, be gracious to us. May we be in your favoured friendship. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

**XVII.1.9** O resplendent Lord, may you protect us from all sides with your unsuppressible rays of our great happiness. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

**XVII.1.10** O resplendent Lord, may you be most gracious to us with your propitious aids, ascending from sky to the third heaven, being praised for enjoying the devotional bliss, possessing a pleasing home for (our) well-being. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

त्वमिन्द्रासि विश्वजित्सर्ववित्पुरुहूतस्त्वमिन्द्र ।
त्वमिन्द्रेमं सुहवं स्तोममेरयस्व स नो मृड सुमतौ ते स्याम तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥११॥
अदब्धो दिवि पृथिव्यामुतासि न त आपुर्महिमानमन्तरिक्षे ।
अदब्धेन ब्रह्मणा वावृधानः स त्वं न इन्द्र दिवि षंछर्म यच्छ तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥१२॥
या त इन्द्र तनूरप्सु या पृथिव्यां यान्तरग्नौ या त इन्द्र पवमाने स्वर्विदि ।
ययेन्द्र तन्वा३न्तरिक्षं व्यापिथ तया न इन्द्र तन्वा३ शर्म यच्छ तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥१३॥
त्वामिन्द्र ब्रह्मणा वर्धयन्तः सत्रं नि षेदुर्ऋषयो नाधमानास्तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥१४॥

त्वम् । इन्द्र । असि । विश्वऽजित् । सर्वऽवित् । पुरुऽहूतः । त्वम् । इन्द्र । त्वम् । इन्द्र । इमम् । सुऽहवम् । स्तोमम् । आ । ईरयस्व । सः । नः । मृड । सुऽमतौ । ते । स्याम । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ ११ ॥

अदब्धः । दिवि । पृथिव्याम् । उत । असि । न । ते । आपुः । महिमानम् । अन्तरिक्षे । अदब्धेन । ब्रह्मणा । ववृधानः । सः । त्वम् । नः । इन्द्र । दिवि । सन् । शर्म । यच्छ । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ १२ ॥

या । ते । इन्द्र । तनूः । अप्ऽसु । या । पृथिव्याम् । या । अन्तः । अग्नौ । या । ते । इन्द्र । पवमाने । स्वःऽविदि । यया । इन्द्र । तन्वा । अन्तरिक्षम् । विऽआपिथ[1] । तया । नः । इन्द्र । तन्वा । शर्म । यच्छ । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥

त्वाम् । इन्द्र[1] । ब्रह्मणा । वर्धयन्तः । सत्रम् । नि । सेदुः । ऋषयः । नाधमानाः । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ १४ ॥

**XVII.1.11** O resplendent Lord, you are conqueror of all, cognizant of all; praised by multitude are you, O resplendent Lord. O resplendent Lord, may you urge onward this well-invoking praise-song. As such, may you be gracious to us. May we be in your favoured friendship. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

**XVII.1.12** You are unimpaired in the sky and on the earth as well. They could not attain your greatness in the midspace. Flourishing with unimpaired knowledge, O resplendent Lord, as such, may you grant us peace and comfort in heaven. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

**XVII.1.13** O resplendent Lord, what form of yours is there in the waters, what on the earth, what within the fire; O resplendent Lord, what (form) of yours is there in the purifying wind (or soma), granter of bliss; with what from you pervade the midspace, thereby may you bestow happiness on us. O pervading Lord, manifold, indeed are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

**XVII.1.14** O resplendent Lord, exalting thee with prayer, imploring, seers have sat down (for) the holy session. O pervading Lord, manifold, indeed are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

त्वं नृतं त्वं पर्येष्युत्सं सहस्रधारं विदथं स्वर्विदं तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमिन् ॥१५॥
त्वं रक्षसे प्रदिशश्चतस्रस्त्वं शोचिषा नभसी वि भासि ।
त्वमिमा विश्वा भुवनानु तिष्ठस ऋतस्य पन्थामन्वेषि विद्वांस्तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमिन् ॥१६॥
पञ्चभिः पराङ्तपस्येकयार्वाङशस्तिमेषि सुदिने बाधमानस्तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमिन् ॥१७॥
त्वमिन्द्रस्त्वं महेन्द्रस्त्वं लोकस्त्वं प्रजापतिः ।
तुभ्यं यज्ञो वि तायते तुभ्यं जुह्वति जुह्वतस्तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमिन् ॥१८॥

त्वम् । नृतम् । त्वम् । परि । एषि । उत्सम् । सहस्रऽधारम् । विदथम् । स्वःऽविदम् । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ १५ ॥

त्वम् । रक्षसे । प्रऽदिशः । चतस्रः । त्वम् । शोचिषा । नभसी इति । वि । भासि । त्वम् । इमा । विश्वा । भुवना । अनु । तिष्ठसे । ऋतस्य । पन्थाम् । अनु । एषि । विद्वान् । तव । इत् । विष्णो इति । बहुधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ १६ ॥

पञ्चऽभिः । पराङ् । तपसि । एकया । अर्वाङ् । अशस्तिम् । एषि । सुऽदिने । बाधमानः । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम । मा । धेहि । परमे । विऽओमन् ॥ १७ ॥

त्वम् । इन्द्रः । त्वम् । महाऽइन्द्रः । त्वम् । लोकः । त्वम् । प्रजाऽपतिः । तुभ्यम् । यज्ञः । वि । तायते । तुभ्यम् । जुह्वति । जुह्वतः । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ १८ ॥

**XVII.1.15** You go to the threefold (trita), you (go) to the thousand-streamed spring, full of knowledge and attainer of bliss. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

**XVII.1.16** It is you, who protect the four mid-quarters; it is you who shine up in the firmament with radiance. It is you, who rule over all these worlds. You follow the path of righteousness knowing it well. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

**XVII.1.17** With five (of your powers) you heat up yonder; with one higher ward. Overpowering (all) blemish, you come on a fine day. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

**XVII.1.18** You are the resplendent one; you are the great resplendent Lord; you are the beholder (lokah); you are the Lord of creatures. For you the sacrifice is arranged widely. To you the sacrificers offer oblations. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

असति सत्प्रतिष्ठितं सति भूतं प्रतिष्ठितम् ।
भूतं ह भव्य आहितं भव्यं भूते प्रतिष्ठितं तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥१९॥
शुक्रोऽसि भ्राजोऽसि । स यथा त्वं भ्राजता भ्राजोस्येवाहं भ्राजता भ्राज्यासम् ॥२०॥
रुचिरसि रोचोऽसि । स यथा त्वं रुच्या रोचोस्येवाहं
पशुभिश्च ब्राह्मणवर्चसेन च रुचिषीय ॥२१॥
उद्यते नम उदायते नम उदिताय नमः । विराजे नमः स्वराजे नमः सम्राजे नमः ॥२२॥
अस्तंयते नमोऽस्तमेष्यते नमोस्तमिताय नमः ।
विराजे नमः स्वराजे नमः सम्राजे नमः ॥२३॥

असति । सत् । प्रतिऽस्थितम् । सति । भूतम् । प्रतिऽस्थितम् । भूतम् । ह । भव्ये । आ-ऽहितम् । भव्यम् । भूते । प्रतिऽस्थितम् । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ १९ ॥

शुक्रः । असि । भ्राजः । असि ।
सः । यथा । त्वम् । भ्राजता । भ्राजः । असि । एव । अहम् । भ्राजता । भ्राज्यासम् ॥

रुचिः । असि । रोचः । असि । सः । यथा । त्वम् । रुच्या । रोचः । असि । एव । अहम् । पशुऽभिः । च । ब्राह्मणऽवर्चसेन । च । रुचिषीय ॥ २१ ॥

उत्ऽयते । नमः । उत्ऽआयते । नमः । उत्ऽइताय । नमः ।
विऽराजे । नमः । स्वऽराजे । नमः । सम्ऽराजे । नमः ॥ २२ ॥

अस्तम्ऽयते । नमः । अस्तम्ऽएष्यते । नमः । अस्तम्ऽइताय । नमः ।
विऽराजे । नमः । स्वऽराजे । नमः । सम्ऽराजे । नमः ॥ २३ ॥

**XVII.1.19** In the non-existent the existent is established; in the existent the past and the present is established; the past and the present is established in the future; the future is established in the past and the present; O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

**XVII.1.20** You are bright; you are the blaze. Just as your blazing with the blaze, so may I also blaze with the blazing.

**XVII.1.21** You are brightness; you are brightener. Just as you are brightener with brightness, so may I become brightened with cattle and intellectual lustre.

**XVII.1.22** Homage be to him, about to rise; homage be to the ascending one; homage be to one, that has risen up; homage be to the extremely refulgent; homage be to the self-refulgent; homage be to the absolute refulgent.

**XVII.1.23** Homage be to him, about to set; homage be to the setting one; homage be to one, that has set; homage be to the extremely refulgent; homage be to the self-refulgent, homage be to the absolute refulgent.

उदगादुयमादित्यो विश्वेन तपसा सह ।
सपत्नान्मह्यं रन्धयन्मा चाहं द्विषते रधं तवेद्विष्णो बहुधा वीर्या॑णि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्यो॑मन् ॥२४॥
आदित्य नावमारुक्षः शतारित्रां स्वस्तये । अहर्मात्यपीपरो रात्रिं सत्राति पारय ॥२५॥
सूर्य नावमारुक्षः शतारित्रां स्वस्तये । रात्रिं मात्यपीपरोहः सत्राति पारय ॥२६॥
प्रजापतेरावृतो ब्रह्मणा वर्मणाहं कश्यपस्य ज्योतिषा वर्चसा च ।
जरदष्टिः कृतवीर्यो विहायाः सहस्रायुः सुकृतश्चरेयम् ॥२७॥
परीवृतो ब्रह्मणा वर्मणाहं कश्यपस्य ज्योतिषा वर्चसा च ।
मा मा प्रापन्निषवो दैव्या या मा मानुषीरवसृष्टा वधाय ॥२८॥

उत् । अगात् । अयम् । आदित्यः । विश्वेन । तपसा । सह । सऽपत्नान् । मह्यम् । रन्धयन् । मा । च । अहम् । द्विषते । रधम् । तव । इत् । विष्णो इति । बहुऽधा । वीर्या॑णि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ २४ ॥

आदित्य । नावम् । आ । अरुक्षः । शतऽअरित्राम् । स्वस्तये ।
अहः । मा । अति । अपीपरः । रात्रिम् । सत्रा । अति । पारय ॥ २५ ॥

सूर्य । नावम् । आ । अरुक्षः । शतऽअरित्राम् । स्वस्तये ।
रात्रिम् । मा । अति । अपीपरः । अहः । सत्रा । अति । पारय ॥ २६ ॥

प्रजाऽपतेः । आऽवृतः । ब्रह्मणा । वर्मणा । अहम् । कश्यपस्य । ज्योतिषा । वर्चसा । च । जरत्ऽअष्टिः । कृतऽवीर्यः । विऽहायाः । सहस्रऽआयुः । सुऽकृतः । चरेयम् ॥ २७ ॥

परिऽवृतः । ब्रह्मणा । वर्मणा । अहम् । कश्यपस्य । ज्योतिषा । वर्चसा । च । मा । मा । प्र । आपन् । इषवः । दैव्याः । याः । मा । मानुषीः । अवऽसृष्टाः । वधाय ॥ २८ ॥

**XVII.1.24** This Āditya (sun) has risen up with all the fiery ardour, subjugating my rivals to me; and may I not be subjugated to my hater. O pervading Lord, manifold, indeed, are your valours, May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

**XVII.1.25** O Āditya (sun), you have embarked upon the hundred-oared boat for (our) weal. You have brought me across to the day; in the same way, may you take me across to the night.

**XVII.1.26** O Surya (sun), you have embarked upon the hundred-oared boat for (our) weal. You have brought me across to the night; in the same way, may you take me across to the day.

**XVII.1.27** Covered with the armour of sacred knowledge of the Lord of creatures and with light and lustre of the all seeing Lord, may I move about upto the ripe old age, vigorous, energetic enjoying a thousand lives and engaged in pious deeds.

**XVII.1.28** Covered I am on all sides with the armour of sacred knowledge and with light and lustre of the all-seeing Lord. May not the arrows, that are divine, nor those, shot by human beings to kill, reach me.

ऋतेन गुप्त ऋतुभिश्च सर्वैर्भूतेन गुप्तो भव्येन चाहम्।
मा मा प्रापत्पाप्मा मोत मृत्युरन्तर्दधेहं सलिलेन वाचः ॥२९॥
अग्निर्मा गोप्ता परि पातु विश्वत उद्यन्त्सूर्यो नुदतां मृत्युपाशान्।
व्युच्छन्तीरुषसः पर्वता ध्रुवाः सहस्रं प्राणा मय्या यतन्ताम् ॥३०॥

ऋतेन। गुप्तः। ऋतुऽभिः। च। सर्वैः। भूतेन। गुप्तः। भव्येन। च। अहम्। मा। मा। प्र। आपत्। पाप्मा। मा। उत। मृत्युः। अन्तः। दधे। अहम्। सलिलेन। वाचः ॥२९॥
अग्निः। मा। गोप्ता। परि। पातु। विश्वतः। उत्ऽयन्। सूर्यः। नुदताम्। मृत्युऽपाशान्। विऽउच्छन्तीः। उषसः। पर्वताः। ध्रुवाः। सहस्रम्। प्राणाः। मयि। आ। यतन्ताम्॥ ३०॥

॥ इति सप्तदशं काण्डम् ॥

[ सूक्तम् १, मन्त्राः ३० ]

**XVII.1.29** Protected (I am) by righteousness and by all the seasons, protected by the past and present and by the future I am. May not the evil approach me, nor the death. I conceal myself with the flood of speech.

**XVII.1.30** May the protector fire divine protect me from all sides. May the rising sun push away the fetters of death. May the dawns shining brightly and mountains firmly set, infuse a thousand vital breaths into me.

---

**Here ends Kāṇḍa XVII**
**Hymn 1, Verses 30**

---

# अथाष्टादशं काण्डम् ॥

## ( १ ) प्रथमं सूक्तम्

(१-६१) एकषष्ट्यृचस्यास्य सूक्तस्याथर्वा ऋषिः। (१-३९, ४७-५०, ५३-६१) प्रथमाद्येकोनचत्वारिंशदृचां सप्तचत्वारिंश्यादिचतसृणां त्रिपञ्चाश्यादिनवानाञ्च यमो मन्त्रोक्ताश्च, (४०) चत्वारिंश्या रुद्रः, (४१-४३) एकचत्वारिंश्यादितृचस्य सरस्वती, (४४-४६, ५१-५२) चतुश्चत्वारिंश्यादितृचस्यैकपञ्चाशीद्विपञ्चाश्योश्च पितरो देवताः। (१-७, ९-१३, १६-१७, २४-३६, ३९-४८, ५१-५५, ५८, ६०) प्रथमादिसप्तानां नवम्यादिपञ्चानां षोडशीसप्तदश्योश्चतुर्विंश्यादित्रयोदशानामेकोनचत्वारिंश्यादिदशानामेकपञ्चाश्यादिपञ्चानामष्टपञ्चाशीषष्ट्योश्च त्रिष्टुप्, (८, १५) अष्टमीपञ्चदश्योरार्षी पङ्क्तिः, (१४, ४९-५०) चतुर्दश्येकोनपञ्चाशीपञ्चाशीनां भुरिक्त्रिष्टुप्, (१८-२३) अष्टादश्यादिषण्णां जगती, (३७-३८) सप्तत्रिंश्यष्टात्रिंश्योः परोष्णिक्, (५६-५७, ६१) षट्पञ्चाशीसप्तपञ्चाश्येकषष्टीनामनुष्टुप्, (५९) एकोनषष्ट्याश्च पुरोबृहती छन्दांसि ॥

ओ चित्सखायं सख्या ववृत्यां तिरः पुरू चिदर्णवं जगन्वान्।
पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दीध्यानः ॥१॥
न ते सखा सख्यं वष्ट्येतत्सलक्ष्मा यद्विषुरूपा भवाति।
महस्पुत्रासो असुरस्य वीरा दिवो धर्तार उर्विया परि ख्यन् ॥२॥
उशन्ति घा ते अमृतास एतदेकस्य चित्त्यजसं मर्त्यस्य।
नि ते मनो मनसि धाय्यस्मे जन्युः पतिस्तन्वमा विविश्याः ॥३॥
न यत्पुरा चकृमा कद्ध नूनमृतं वदन्तो अनृतं रपेम।
गन्धर्वो अप्स्वप्या च योषा सा नौ नाभिः परमं जामि तन्नौ ॥४॥

ओ इति। चित्। सखायम्। सख्या। ववृत्याम्। तिरः। पुरु। चित्। अर्णवम्। जगन्वान्। पितुः। नपातम्। आ। दधीत। वेधाः। अधि। क्षमि। प्रऽतरम्। दीध्यानः ॥

न। ते। सखा। सख्यम्। वष्टि। एतत्। सऽलक्ष्मा। यत्। विषुऽरूपा। भवाति। महः। पुत्रासः। असुरस्य। वीराः। दिवः। धर्तारः। उर्विया। परि। ख्यन् ॥ २ ॥

उशन्ति। घ। ते। अमृतासः। एतत्। एकस्य। चित्। त्यजसम्। मर्त्यस्य। नि। ते। मनः। मनसि। धायि। अस्मे इति। जन्युः। पतिः। तन्वम्। आ। विविश्याः ॥ ३ ॥

न। यत्। पुरा। चकृम। कत्। ह। नूनम्। ऋतम्। वदन्तः। अनृतम्। रपेम। गन्धर्वः। अप्ऽसु। अप्या। च। योषा। सा। नौ। नाभिः। परमम्। जामि। तत्। नौ ॥ ४ ॥

**Yama**

**XVIII.1.1** Unto a friend would I turn with friendship; having gone through much ocean, may the pious one take a grandson of his father, considering further onward upon the earth.

**XVIII.1.2** Thy friend wants not that friendship of thine, that she of like sign should become of diverse form; the sons of the great Asura, heroes, sustainers of the sky; look widely about.

**XVIII.1.3** Truly those immortals want that – posterity of the one mortal; may thy mind be set in our mind; mayest thou enter (as) husband a wife's body.

**XVIII.1.4** What we did not do formerly, why (do that) now ? Speaking righteousness, should we prate unrighteousness ? The Gandharva in the waters and the watery woman – that is our union, that our highest relation.

गर्भे नु नौ जनिता दंपती कर्देवस्त्वष्टा सविता विश्वरूपः ।
नकिरस्य प्र मिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः ॥५॥
को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥६॥
को अस्य वेद प्रथमस्याह्नः क ईं ददर्श क इह प्र वोचत् ।
बृहन्मित्रस्य वरुणस्य धाम कदु ब्रव आहनो वीच्या नॄन् ॥७॥
यमस्य मा यम्यं१ काम आगन्त्समाने योनौ सहशेय्याय ।
जायेव पत्ये तन्वं रिरिच्यां वि चिद्वृहेव रथ्येव चक्रा ॥८॥
न तिष्ठन्ति न नि मिषन्त्येते देवानां स्पश इह ये चरन्ति ।
अन्येन मदाहनो याहि तूयं तेन वि वृह रथ्येव चक्रा ॥९॥
रात्रीभिरस्मा अहभिर्दशस्येत्सूर्यस्य चक्षुर्मुहुरुन्मिमीयात् ।
दिवा पृथिव्या मिथुना सबन्धू यमीर्यमस्य विवृहादजामि ॥१०॥

गर्भे । नु । नौ । जनिता । दंपती इति दम्ऽपती । कः । देवः । त्वष्टा । सविता । विश्वऽरूपः ।
नकिः । अस्य । प्र । मिनन्ति । व्रतानि । वेद । नौ । अस्य । पृथिवी । उत । द्यौः ॥ ५ ॥
कः । अद्य । युङ्क्ते । धुरि । गाः । ऋतस्य । शिमीऽवतः । भामिनः । दुःऽहृणायून् ।
आसन्ऽइषून् । हृत्सुऽअसः । मयःऽभून् । यः । एषाम् । भृत्याम् । ऋणधत् । सः । जीवात् ॥६॥
कः । अस्य । वेद । प्रथमस्य । अह्नः । कः । ईम् । ददर्श । कः । इह । प्र । वोचत् ।
बृहत् । मित्रस्य । वरुणस्य । धाम । कत् । ऊं इति । ब्रवः । आहनः । वीच्या । नॄन् ॥ ७ ॥
यमस्य । मा । यम्यम् । कामः । आ । अगन् । समाने । योनौ । सहऽशेय्याय ।
जायाऽइव । पत्ये । तन्वम् । रिरिच्याम् । वि । चित् । वृहेव । रथ्याऽइव । चक्रा ॥८॥
न । तिष्ठन्ति । न । नि । मिषन्ति । एते । देवानाम् । स्पशः । इह । ये । चरन्ति ।
अन्येन । मत् । आहनः । याहि । तूयम् । तेन । वि । वृह । रथ्याऽइव । चक्रा ॥९॥
रात्रीभिः । अस्मै । अहऽभिः । दशस्येत् । सूर्यस्य । चक्षुः । मुहुः । उत् । मिमीयात् ।
दिवा । पृथिव्या । मिथुना । सबन्धु इति सऽबन्धू । यमीः । यमस्य । विवृहात् । अजामि ॥

**XVIII.1.5** Verily, the generator made us in the womb man and spouse -- god Tvaṣṭar, Savitar of all forms; none overthrow his ordinances; earth knows us (two) as such, also heaven.

**XVIII.1.6** Who yokes to the pole today the kine of righteousness, the diligent, the bright, the slow to wrath, that have arrows in the mouth, that shoot at the heart, amiable ones ? Whoso shall prosper their burden, he shall live.

**XVIII.1.7** Who knows of that first day ? Who saw it ? Who shall proclaim it here ? Great is the ordinance of Mitra, of Varuṇa; why, O lustful one, wilt thou speak to men with deceit.

**XVIII.1.8** Desire of Yama had come unto me Yamī, in order to lying together in the same lair I would fain yield my body, as wife to husband; may we whirl off, like two chariot wheels.

**XVIII.1.9** They stand not, they wink not, those spies of the gods who go about here; with another than me, O lustful one, go quickly; with him whirl off like two chariot wheels.

**XVIII.1.10** By nights, by days one may pay reverence to him; the sun's eye may open for a moment; with heaven, with earth paired of near connection;–Yamī must bear the unbrotherly (conduct) of Yama.

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि ।
उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥११॥
किं भ्रातासद्यदनाथं भवाति किमु स्वसा यन्निर्ऋतिर्निगच्छात् ।
काममूता बह्वे३तद्रपामि तन्वा मे तन्वं१ सं पिपृग्धि ॥१२॥
न ते नाथं यम्यत्राहमस्मि न ते तनूं तन्वा३ सं पपृच्याम् ।
अन्येन मत्प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत् ॥१३॥
न वा उ ते तनूं तन्वा३ सं पपृच्यां पापमाहुर्यः स्वसारं निगच्छात् ।
असंयदेतन्मनसो हृदो मे भ्राता स्वसुः शयने यच्छयीय ॥१४॥
बतो बतासि यम नैव ते मनो हृदयं चाविदाम ।
अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजातै लिबुजेव वृक्षम् ॥१५॥
अन्य ऊ षु यम्यन्य उ त्वां परि ष्वजातै लिबुजेव वृक्षम् ।
तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम् ॥१६॥

आ । घ । ता । गच्छान् । उत्ऽतरा । युगानि । यत्र । जामयः । कृणवन् । अजामि ।
उप । बर्बृहि । वृषभाय । बाहुम् । अन्यम् । इच्छस्व । सुऽभगे । पतिम् । मत् ॥ ११ ॥

किम् । भ्राता । असत् । यत् । अनाथम् । भवाति । किम् । ऊं इति । स्वसा । यत् । निःऽऋतिः ।
निऽगच्छात् । कामऽमूता । बहु । एतत् । रपामि । तन्वा । मे । तन्वम् । सम् । पिपृग्धि ॥

न । ते । नाथम् । यमि । अत्र । अहम् । अस्मि । न । ते । तनूम् । तन्वा । सम् ।
पपृच्याम् । अन्येन । मत् । प्रऽमुदः । कल्पयस्व । न । ते । भ्राता । सुऽभगे । वष्टि । एतत् ॥

न । वै । ऊं इति । ते । तनूम् । तन्वा । सम् । पपृच्याम् । पापम् । आहुः । यः ।
स्वसारम् । निऽगच्छात् । असम्ऽयत् । एतत् । मनसः । हृदः । मे । भ्राता । स्वसुः ।
शयने । यत् । शयीय ॥ १४ ॥

बतः । बत । असि । यम । न । एव । ते । मनः । हृदयम् । च । अविदाम । अन्या ।
किल । त्वाम् । कक्ष्याऽइव । युक्तम् । परि । स्वजातै । लिबुजाऽइव । वृक्षम् ॥ १५ ॥

अन्यम् । ऊं इति । सु । यमि । अन्यः । ऊं इति । त्वाम् । परि । स्वजातै । लिबुजाऽइव ।
वृक्षम् । तस्य । वा । त्वम् । मनः । इच्छ । सः । वा । तव । अध । कृणुष्व । समऽविदम् । सुऽभद्राम् ॥

**XVIII.1.11** Verily there shall come those later ages in which next of kin shall do what is unkinly. Put thine arm underneath a hero; seek, O fortunate one, another husband.

**XVIII.1.12** What should brother be when there is no protector ? or what sister, when destruction impends ? Impelled by desire, I prate thus much; mingle thou thy body with my body.

**XVIII.1.13** I am not thy protector here, O Yamī; I may not mingle my body with thy body; with another than me do thou prepare enjoyments: thy brother wants not that, O fortunate one.

**XVIII.1.14** Verily, I may not mingle my body with thy body; they call him wicked who should approach his sister. That is not consonant with my mind (and) heart, that I, a brother, should lie in a sister's bed (śayana).

**XVIII.1.15** A weakling, alas, art thou, O Yama; we have not found mind and heart thine; verily, another woman shall embrace thee, as a girth a harnessed (horse), as twining plant a tree.

**XVIII.1.16** Another man, truly, O Yamī, another man shall embrace thee, as twining plant a tree; either do thou seek his mind or he thine; then make for thyself very excellent concord.

त्रीणि च्छन्दांसि कवयो वि येतिरे पुरुरूपं दर्शतं विश्वचक्षणम् ।
आपो वाता ओषधयस्तान्येकस्मिन्भुवन आर्पितानि ॥१७॥
वृषा वृष्णे दुदुहे दोहसा दिवः पयांसि यह्वो अदितेरदाभ्यः ।
विश्वं स वेद वरुणो यथा धिया स यज्ञियो यजति यज्ञियाँ ऋतून् ॥१८॥
रपद्गन्धर्वीरप्या च योषणा नदस्य नादे परि पातु नो मनः ।
इष्टस्य मध्ये अदितिर्नि धातु नो भ्राता नो ज्येष्ठः प्रथमो वि वोचति ॥१९॥
सो चिन्नु भद्रा क्षुमती यशस्वत्युषा उवास मनवे स्वर्वती ।
यदीमुशन्तमुशतामनु क्रतुमग्निं होतारं विदथाय जीजनन् ॥२०॥
अध त्यं द्रप्सं विभ्वं विचक्षणं विराभरदिषिरः श्येनो अध्वरे ।
यदी विशो वृणते दस्ममार्या अग्निं होतारमध धीरजायत ॥२१॥
सदासि रण्वो यवसेव पुष्यते होत्राभिरग्ने मनुषः स्वध्वरः ।
विप्रस्य वा यच्छशमान उक्थ्यो३ वाजं ससवाँ उपयासि भूरिभिः ॥२२॥

त्रीणि । छन्दांसि । कवयः । वि । येतिरे । पुरुऽरूपम् । दर्शतम् । विश्वऽचक्षणम् ।
आपः । वाताः । ओषधयः । तानि । एकस्मिन् । भुवने । आर्पितानि ॥ १७ ॥

वृषा । वृष्णे । दुदुहे । दोहसा । दिवः । पयांसि । यह्वः । अदितेः । अदाभ्यः ।
विश्वम् । सः । वेद । वरुणः । यथा । धिया । सः । यज्ञियः । यजति । यज्ञियान् । ऋतून् ॥ १८ ॥

रपत् । गन्धर्वीः । अप्या । च । योषणा । नदस्य । नादे । परि । पातु । नः । मनः । इष्टस्य ।
मध्ये । अदितिः । नि । धातु । नः । भ्राता । नः । ज्येष्ठः । प्रथमः । वि । वोचति ॥१९ ॥

सो इति । चित् । नु । भद्रा । क्षुऽमती । यशस्वती । उषाः । उवास । मनवे । स्वःऽवती ।
यत् । ईम् । उशन्तम् । उशताम । अनु । क्रतुम् । अग्निम् । होतारम् । विदथाय । जीजनन् ॥

अध । त्यम् । द्रप्सम् । विऽभ्वम् । विऽचक्षणम् । विः । आ । अभरत् । इषिरः । श्येनः ।
अध्वरे । यदि । विशः । वृणते । दस्मम् । आर्याः । अग्निम् । होतारम् । अध । धीः । अजायत ॥

सदा । असि । रण्वः । यवसाऽइव । पुष्यते । होत्राभिः । अग्ने । मनुषः । सुऽअध्वरः ।
विप्रस्य । वा । यत् । शशमानः । उक्थ्यः । वाजम् । ससऽवान् । उपऽयासि । भूरिऽभिः ॥ २२ ॥

## Agni

**XVIII.1.17** Three meters the poets extended – the many -formed one, the admirable, the all-beholding; water, winds, herbs – these are set in one being (bhuvana).

**XVIII.1.18** The bull yieldeth milks for the bull with the milking of the sky, he the unharmable son of Aditi; everything knoweth he, like Varuna, by thought; he, sharing the sacrifice sacrificeth to the seasons that share the sacrifice.

**XVIII.1.19** Prateth the Gandharvī and watery woman; in the noise of the noisy one let (her) protect our mind; let Aditi set us in the midst of what is desired; our oldest brother shall first speak out.

**XVIII.1.20** She now, the excellent, rich in food, full of glory – the dawn hath shone for man full of light; since they have generated for the council (as) hotr Agni, the eager one, after the will of the eager ones.

**XVIII.1.21** Then that mighty conspicuous drop did the bird, the lively falcon, bring at the sacrifice; if the Aryan tribes choose the wondrous one; Agni, then prayer was born.

**XVIII.1.22** Ever art thou pleasant, as pastures to him that enjoys them, being, O Agni, well sacrificed to with the offerings of man; or when, active, praiseworthy, having won the strength of the inspired one, thou approaches with very many.

उदीरय पितरा जार आ भगमियक्षति हर्यतो हृत्त इष्यति ।
विवक्ति वह्निः स्वपस्यते मखस्तविष्यते असुरो वेपते मती ॥२३॥
यस्ते अग्ने सुमतिं मर्तो अख्यत्सहसः सूनो अति स प्र शृण्वे ।
इषं दधानो वहमानो अश्वैरा स द्युमाँ अमवान्भूषति द्यून् ॥२४॥
श्रुधी नो अग्ने सदने सधस्थे युक्ष्वा रथममृतस्य द्रवित्नुम् ।
आ नो वह रोदसी देवपुत्रे माकिर्देवानामप भूरिह स्याः ॥२५॥
यदग्न एषा समितिर्भवाति देवी देवेषु यजता यजत्र ।
रत्ना च यद्विभजासि स्वधावो भागं नो अत्र वसुमन्तं वीतात् ॥२६॥
अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ।
अनु सूर्य उषसो अनु रश्मीननु द्यावापृथिवी आ विवेश ॥२७॥
प्रत्यग्निरुषसामग्रमख्यत्प्रत्यहानि प्रथमो जातवेदाः ।
प्रति सूर्यस्य पुरुधा च रश्मीन्प्रति द्यावापृथिवी आ ततान ॥२८॥

उत् । ईरय । पितरा । जारः । आ । भगम् । इयक्षति । हर्यतः । हृत्तः । इष्यति ।
विवक्ति । वह्निः । सुऽअपस्यते । मखः । तविष्यते । असुरः । वेपते । मती ॥ २३ ॥
यः । ते । अग्ने । सुऽमतिम् । मर्तः । अख्यत् । सहसः । सूनो इति । अति । सः । प्र ।
शृण्वे । इषम् । दधानः । वहमानः । अश्वैः । आ । सः । द्युऽमान् । अमऽवान् । भूषति । द्यून् ॥
श्रुधि । नः । अग्ने । सदने । सधऽस्थे । युक्ष्व । रथम् । अमृतस्य । द्रवित्नुम् । आ ।
नः । वह । रोदसी इति । देवपुत्रे इति देवऽपुत्रे । माकिः । देवानाम् । अप । भूः । इह । स्याः ॥
यत् । अग्ने । एषा । समऽइतिः । भवाति । देवी । देवेषु । यजता । यजत्र । रत्ना । च ।
यत् । विऽभजासि । स्वधाऽवः । भागम् । नः । अत्र । वसुऽमन्तम् । वीतात् ॥ २६ ॥
अनु । अग्निः । उषसाम् । अग्रम् । अख्यत् । अनु । अहानि । प्रथमः । जातऽवेदाः । अनु ।
सूर्यः । उषसः । अनु । रश्मीन् । अनु । द्यावापृथिवी इति । आ । विवेश ॥ २७ ॥
प्रति । अग्निः । उषसाम् । अग्रम् । अख्यत् । प्रति । अहानि । प्रथमः । जातऽवेदाः । प्रति ।
सूर्यस्य । पुरुऽधा । च । रश्मीन् । प्रति । द्यावापृथिवी इति । आ । ततान ॥ २८ ॥

**XVIII.1.23** Send thou up the (two) fathers, (as) a lover, unto enjoyment. The welcome one desires to sacrifice; he sends from the heart; the bearer speaks out; the merry one does a good work; the Asura shows might; he trembles with purpose.

**XVIII.1.24** Whatever mortal hath seen thy favor, O Agni son of power, he is renowned exceedingly; acquiring food, borne by horses, he lightful vigorous, passes the days.

**XVIII.1.25** Hear us, O Agni, in thy seat, thy station; harness the speedy chariot of the immortal; bring to us the two firmaments, parents of the gods be thou of gods never away; mayest thou be here.

**XVIII.1.26** That, O Agni, this meeting may take place, divine, among the gods, worshipful, thou reverend one, and that thou mayest share out treasures, O self-ruling one, do thou enjoy here our portion filled with good things. [Also Rg X.II.8]

**Agni**

**XVIII.1.27** Agni hath looked after the apex of the dawns, after the days, (he) first, Jātavedas; a sun, after the dawns, after the rays; after heaven-and earth he entered.

**XVIII.1.28** Agni hath looked forth to meet the apex of the dawns, to meet the days, (he) first, Jātavedas, and to meet the rays of the sun in many places; to meet heaven and earth he stretched out.

द्यावा ह क्षामा प्रथमे ऋतेनाभिश्रावे भवतः सत्यवाचा ।
देवो यन्मर्तान्यजथाय कृण्वन्त्सीदद्धोता प्रत्यङ् स्वमसुं यन् ॥२९॥
देवो देवान्परिभूर्ऋतेन वहा नो हव्यं प्रथमश्चिकित्वान् ।
धूमकेतुः समिधा भाऋजीको मन्द्रो होता नित्यो वाचा यजीयान् ॥३०॥ (१)
अर्चामि वां वर्धायापो घृतस्नू द्यावाभूमी शृणुतं रोदसी मे ।
अहा यद्देवा असुनीतिमायन्मध्वा नो अत्र पितरा शिशीताम् ॥३१॥
स्वावृग्देवस्यामृतं यदी गोरतो जातासो धारयन्त उर्वी ।
विश्वे देवा अनु तत्ते यजुर्गुर्दुहे यदेनी दिव्यं घृतं वाः ॥३२॥
किं स्विन्नो राजा जगृहे कदस्याति व्रतं चकृमा को वि वेद ।
मित्रश्चिद्धि ष्मा जुहुराणो देवाञ्छ्लोको न यातामपि वाजो अस्ति ॥३३॥
दुर्मन्त्वत्रामृतस्य नाम सलक्ष्मा यद्विषुरूपा भवाति ।
यमस्य यो मनवते सुमन्त्वग्ने तमृष्व पाह्यप्रयुच्छन् ॥३४॥

द्यावा । ह । क्षामा । प्रथमे इति । ऋतेन । अभिऽश्रावे । भवतः । सत्यऽवाचा । देवः । यत् । मर्तान् । यजथाय । कृण्वन् । सीदत् । होता । प्रत्यङ् । स्वम । असुम् । यन् ॥ २९ ॥

देवः । देवान् । परिऽभूः । ऋतेन । वह । नः । हव्यम् । प्रथमः । चिकित्वान् । धूमऽकेतुः । सम्ऽइधा । भाःऽऋजीकः । मन्द्रः । होता । नित्यः । वाचा । यजीयान् ॥ ३० ॥

अर्चामि । वाम् । वर्धाय । अपः । घृतस्नू इति घृतऽस्नू । द्यावाभूमी इति । शृणुतम् । रोदसी इति । मे । अहा । यत् । देवाः । असुऽनीतिम् । आयन् । मध्वा । नः । अत्र । पितरा । शिशीताम् ॥ ३१ ॥

स्वावृक् । देवस्य । अमृतम् । यदि । गोः । अतः । जातासः । धारयन्ते । उर्वी इति । विश्वे । देवाः । अनु । तत् । ते । यजुः । गुः । दुहे । यत् । एनी । दिव्यम् । घृतम् । वाः ॥

किम् । स्वित् । नः । राजा । जगृहे । कत् । अस्य । अति । व्रतम् । चकृम । कः । वि । वेद । मित्रः । चित् । हि । स्म । जुहुराणः । देवान् । श्लोकः । न । याताम । अपि । वाजः । अस्ति ॥ ३३ ॥

दुःऽमन्तु । अत्र । अमृतस्य । नाम । सऽलक्ष्मा । यत् । विषुऽरूपा । भवाति । यमस्य । यः । मनवते । सुऽमन्तु । अग्ने । तम् । ऋष्व । पाहि । अप्रऽयुच्छन् ॥ ३४ ॥

**XVIII.1.29** Heaven and earth, first by right, truth-speaking are within hearing, when the god, making mortals to sacrifice, sits as hotr, going to meet his own being. [Also Rg X.12.1]

**XVIII.1.30** A God, encompassing the gods with right, carry thou first our offering, understanding (it); smoke-bannered by the fuel, light-beaming, a pleasant, constant hotr, skilled sacrificer with speech. [Also Rg X.12.2]

**XVIII.1.31** I praise your work unto increase, ye ghee-surfaced ones; O heaven and earth, hear me, ye two firmaments; when days, O gods, went to the other life; let the two parents sharpen us here with honey. [Also Rg X.12.4]

**XVIII.1.32** If the god's immortality is easy to appropriate for the cow, thence those who are born maintain themselves on the broad (earth); all the gods go after that sacrificial formula of thine, when the hind yields the ghee, heavenly liquor. [Also Rg X.12.3].

**XVIII.1.33** Why forsooth hath the king seized us ? What have we done in transgression of his ordinance? who discerns (it)? for even Mitra, swerving the gods, like a song of praise, is the might also of them that go. [Also Rg X.12.5]

**XVIII.1.34** Hard to reverence here is the name of the immortal, that she of like sign should become of diverse form; whoso shall reverence, him O Agni, exalted one, do thou protect, unremitting. [Also Rg X.12.6]

यस्मिन्देवा विदथे मादयन्ते विवस्वतः सदने धारयन्ते ।
सूर्ये ज्योतिरदधुर्मास्य१क्तून्परि द्योतनिं चरतो अजस्रा ॥३५॥
यस्मिन्देवा मन्मनि संचरन्त्यपीच्ये३ न वयमस्य विद्म ।
मित्रो नो अत्रादितिरनागान्त्सविता देवो वरुणाय वोचत् ॥३६॥
सखाय आ शिषामहे ब्रह्मेन्द्राय वज्रिणे ।
स्तुष ऊ षु नृतमाय धृष्णवे ॥३७॥
शवसा ह्यसि श्रुतो वृत्रहत्येन वृत्रहा ।
मघैर्मघोनो अति शूर दाशसि ॥३८॥
स्तेगो न क्षामत्येषि पृथिवीं मही नो वाता इह वान्तु भूमौ ।
मित्रो नो अत्र वरुणो युज्यमानो अग्निर्वने न व्यसृष्ट शोकम् ॥३९॥
स्तुहि श्रुतं गर्तसदं जनानां राजानं भीममुपहत्नुमुग्रम् ।
मृडा जरित्रे रुद्र स्तवानो अन्यमस्मत्ते नि वपन्तु सेन्यम् ॥४०॥ (४)

यस्मिन् । देवाः । विदथे । मादयन्ते । विवस्वतः । सदने । धारयन्ते । सूर्ये ।
ज्योतिः । अदधुः । मासि । अक्तून् । परि । द्योतनिम् । चरतः । अजस्रा ॥ ३५ ॥
यस्मिन् । देवाः । मन्मनि । सम्ऽचरन्ति । अपीच्ये । न । वयम् । अस्य । विद्म ।
मित्रः । नः । अत्र । अदितिः । अनागान् । सविता । देवः । वरुणाय । वोचत् ॥ ३६ ॥
सखायः । आ । शिषामहे । ब्रह्म । इन्द्राय । वज्रिणे ।
स्तुषे । ऊं इति । सु । नृऽतमाय । धृष्णवे ॥ ३७ ॥
शवसा । हि । असि । श्रुतः । वृत्रऽहत्येन । वृत्रऽहा । मघैः । मघोनः । अति । शूर । दाशसि ॥३८॥
स्तेगः । न । क्षाम् । अति । एषि । पृथिवीम् । मही इति । नः । वाताः । इह । वान्तु ।
भूमौ । मित्रः । नः । अत्र । वरुणः । युज्यमानः । अग्निः । वने । न । वि । असृष्ट । शोकम् ॥
स्तुहि । श्रुतम् । गर्तऽसदम् । जनानाम् । राजानम् । भीमम् । उपऽहत्नुम् । उग्रम् ।
मृड । जरित्रे । रुद्र । स्तवानः । अन्यम् । अस्मत् । ते । नि । वपन्तु । सेन्यम् ॥ ४० ॥

**XVIII.1.35** In whom the gods ṛevel at the council, maintain themselves in Vivasvant's seat – they placed light in the sun, rays in the moon: the unfailing, wait upon the brightness. [Also Ṛg X.12.7]

**XVIII.1.36** In what secret devotion the gods go about – we know it not; may Mitra; may Aditi, may god Savitar declare us here guiltless to Varuṇa. [Also Ṛg.X.12.8]

### Indra

**XVIII.1.37** O companions, we would supplicate worship for Indra, possessor of the thunderbolt, to praise indeed, the most manly, the daring. [Also Ṛg. VIII.24.1]

**XVIII.1.38** For thou art famed for might, for Vṛtra-slaying, a Vṛtra slayer; thou out-bestowest the bounteous with thy bounties, O hero. [Also Ṛg.VIII.24.2]

**XVIII.1.39** Thou goest over the earth as a steg over the ground; let winds blow here on the great earth for us; Mitra for us there (atra), Varuṇa, being joined, hath let loose heat, as fire does in the forest.

### Rudra

**XVIII.1.40** Praiṣe thou the famed sitter on the hollow of men, the terrible king, formidable assailant; being praised, O Rudra, be gracious to the singer; let thine army lay low another than us. [Also Ṛg II.33.11]

सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने ।
सरस्वतीं सुकृतो हवन्ते सरस्वती दाशुषे वार्यं दात् ॥४१॥
सरस्वतीं पितरो हवन्ते दक्षिणा यज्ञमभिनक्षमाणाः ।
आसद्यास्मिन्बर्हिषि मादयध्वमनमीवा इष आ धेह्यस्मे ॥४२॥
सरस्वति या सरथं ययाथोक्थैः स्वधाभिर्देवि पितृभिर्मदन्ती ।
सहस्रार्घमिडो अत्र भागं रायस्पोषं यजमानाय धेहि ॥४३॥
उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥४४॥
आहं पितॄन्त्सुविदत्रॉं अवित्सि नपातं च विक्रमणं च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥४५॥
इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो ये अपरास ईयुः ।
ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु दिक्षु ॥४६॥

सरस्वतीम् । देवऽयन्तः । हवन्ते । सरस्वतीम् । अध्वरे । तायमाने ।
सरस्वतीम् । सुऽकृतः । हवन्ते । सरस्वती । दाशुषे । वार्यम् । दात् ॥ ४१ ॥
सरस्वतीम् । पितरः । हवन्ते । दक्षिणा । यज्ञम् । अभिऽनक्षमाणाः । आऽसद्य । अस्मिन् ।
बर्हिषि । मादयध्वम् । अनमीवाः । इषः । आ । धेहि । अस्मे इति ॥ ४२ ॥
सरस्वति । या । सऽरथम् । ययाथ । उक्थैः । स्वधाभिः । देवि । पितृऽभिः । मदन्ती ।
सहस्रऽअर्घम् । इडः । अत्र । भागम् । रायः । पोषम् । यजमानाय । धेहि ॥ ४३ ॥
उत् । ईरताम् । अवरे । उत् । परासः । उत् । मध्यमाः । पितरः । सोम्यासः ।
असुम् । ये । ईयुः । अवृकाः । ऋतऽज्ञाः । ते । नः । अवन्तु । पितरः । हवेषु ॥ ४४ ॥
आ । अहम् । पितॄन् । सुऽविदत्रान् । अवित्सि । नपातम् । च । विऽक्रमणम् । च ।
विष्णोः । बर्हिऽसदः । ये । स्वधया । सुतस्य । भजन्त । पित्वः । ते । इह । आऽगमिष्ठाः ॥
इदम् । पितृऽभ्यः । नमः । अस्तु । अद्य । ये । पूर्वासः । ये अपरासः । ईयुः । ये ।
पार्थिवे । रजसि । आ । निऽसत्ताः । ये । वा । नूनम् । सुऽवृजनासु । दिक्षु ॥ ४६ ॥

## Sarasvatī

**XVIII.1.41** On Sarasvatī do the pious call; on Sarasvatī, while the sacrifice is being extended; on Sarasvatī do the well-doers call: may Sarasvatī give what is desirable to the worshiper.

**XVIII.1.42** On Sarasvatī do the Fathers call, arriving at the sacrifice on the south; sitting on this barhis do ye revel; assign thou to us food free from disease.

**XVIII.1.43** O Sarasvatī, that wentest in company with the songs, with the svadhas, O goddess, reveling with the Fathers, assign thou to the sacrificer here a portion of refreshment of thousandfold value, abundance of wealth.

## Pitaraḥ : Fathers

**XVIII.1.44** Let the lower, let the higher, let the midmost Fathers, the soma drinking, go up, they who went to life, unharmed, right-knowing — let those Fathers aid us at our calls. [Ṛg X.15.1]

**XVIII.1.45** I have won hither the beneficent Fathers, both the grandson and the wide-striding of Viṣṇu; they who, sitting on the barhis, partake of the pressed drink with svadha - they come especially hither. [Also Ṛg.X.15.3]

**XVIII.1.46** Be this homage today to the Fathers, who went first, who went after, who are seated in the space of earth, or who are now in region, having good abodes. [Also Ṛg.X.15.2]

मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ।
यांश्च देवा वावृधुर्ये च देवांस्ते नोऽवन्तु पितरो हवेषु ॥४७॥
स्वादुष्किलायं मधुमाँ उतायं तीव्रः किलायं रसवाँ उतायम् ।
उतो न्व१स्य पपिवांसमिन्द्रं न कश्चन सहत आहवेषु ॥४८॥
परेयिवांसं प्रवतो महीरिति बहुभ्यः पन्थामनुपस्पशानम् ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा सपर्यत ॥४९॥
यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ ।
यत्रा नः पूर्वे पितरः परेता एना जज्ञानाः पथ्या३ अनु स्वाः ॥५०॥
बर्हिषदः पितर ऊत्य१र्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आ गतावसा शंतमेनाधा नः शं योररपो दधात ॥५१॥
आच्या जानु दक्षिणतो निषद्येदं नो हविरभि गृणन्तु विश्वे ।
मा हिंसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥५२॥

मातली । कव्यैः । यमः । अङ्गिरःऽभिः । बृहस्पतिः । ऋक्वऽभिः । ववृधानः । यान् ।
च । देवाः । ववृधुः । ये । च । देवान् । ते । नः । अवन्तु । पितरः । हवेषु ॥ ४७ ॥
स्वादुः । किल । अयम् । मधुऽमान् । उत । अयम् । तीव्रः । किल । अयम् । रसऽवान् ।
उत । अयम् । उतो इति । नु । अस्य । पपिऽवांसम् । इन्द्रम् । न । कः । चन । सहते । आऽहवेषु ॥
परेयिऽवांसम् । प्रऽवतः । महीः । इति । बहुऽभ्यः । पन्थाम् । अनुऽपस्पशानम् ।
वैवस्वतम् । सम्ऽगमनम् । जनानाम् । यमम् । राजानम् । हविषा । सपर्यत ॥ ४९ ॥
यमः । नः । गातुम् । प्रथमः । विवेद । न । एषा । गव्यूतिः । अपऽभर्तवै । ऊं इति ।
यत्र । नः । पूर्वे । पितरः । पराऽइताः । एना । जज्ञानाः । पथ्याः । अनु । स्वाः ॥५०॥
बर्हिऽसदः । पितरः । ऊती । अर्वाक् । इमा । वः । हव्या । चकृम । जुषध्वम् ।
ते । आ । गत । अवसा । शम्ऽतमेन । अध । नः । शम् । योः । अरपः । दधात ॥५१॥
आऽअच्य । जानु । दक्षिणतः । निऽसद्य । इदम् । नः । हविः । अभि । गृणन्तु । विश्वे ।
मा । हिंसिष्ट । पितरः । केन । चित् । नः । यत् । वः । आगः । पुरुषता । कराम ॥५२॥

### Yama

**XVIII.1.47** Mātali with the kavās, Yama with the Añgirases, Bṛhaspatī increasing with the ṛkvans (praisers); both they whom the gods increased and who (increased) the gods — let those Fathers aid us at our calls. [Rg X.14.3.Var.]

### Soma

**XVIII.1.48** Sweet verily is this (Soma), and full of honey is this; strong verily is this, and full of sap is this; and no one soever overpowers in conflicts Indra, having now drunk of it. [Rg.VI.47.1]

### Yama

**XVIII.1.49** Him that went away to the advances called great, spying out the road for many, Vivasvant's son, gatherer of people, king Yama, honor ye with oblation.

**XVIII.1.50** Yama first found for us a track; that is not a pasture to be borne away; where our former Fathers went forth, there (go) those born (of them), along their own roads.

### Pitaraḥ

**XVIII.1.51** Ye barhis-seated Fathers, hitherward with aid; these offerings have we made for you; enjoy (them) do ye come with most wealful aid; then assign to us weal (and) profit, free from evil.

**XVIII.1.52** Bending the knee, sitting down on the right, let all assent to this libation of ours; injure us not, O Fathers, by reason of any offense which we may do to you through humanity.

त्वष्टा दुहित्रे वहतुं कृणोति तेनेदं विश्वं भुवनं समेति ।
यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ॥५३॥
प्रेहि प्रेहि पथिभिः पूर्याणैर्येना ते पूर्वे पितरः परेताः ।
उभा राजानौ स्वधया मदन्तौ यमं पश्यासि वरुणं च देवम् ॥५४॥
अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन् ।
अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥५५॥

उशन्तस्त्वेधीमह्युशन्तः समिधीमहि ।
उशन्नुशत आ वह पितॄन्हविषे अत्तवे ॥५६॥
द्युमन्तस्त्वेधीमहि द्युमन्तः समिधीमहि ।
द्युमान्द्युमत आ वह पितॄन्हविषे अत्तवे ॥५७॥

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥५८॥

त्वष्टा । दुहित्रे । वहतुम् । कृणोति । तेन । इदम् । विश्वम् । भुवनम् । सम् । एति ।
यमस्य । माता । परिऽउह्यमाना । महः । जाया । विवस्वतः । ननाश ॥ ५३ ॥
प्र । इहि । प्र । इहि । पथिऽभिः । पूःऽयानैः । येन । ते । पूर्वे । पितरः । पराऽइताः ।
उभा । राजानौ । स्वधया । मदन्तौ । यमम् । पश्यासि । वरुणम् । च । देवम् ॥ ५४ ॥
अप । इत । वि । इत । वि । च । सर्पत । अतः । अस्मै । एतम् । पितरः । लोकम् ।
अक्रन् । अहःऽभिः । अत्ऽभिः । अक्तुऽभिः । विऽअक्तम् । यमः । ददाति । अवऽसानम् । अस्मै ॥
उशन्तः । त्वा । इधीमहि । उशन्तः । सम् । इधीमहि ।
उशन् । उशतः । आ । वह । पितॄन् । हविषे । अत्तवे ॥ ५६ ॥
द्युऽमन्तः । त्वा । इधीमहि । द्युऽमन्तः । सम् । इधीमहि ।
द्युऽमान् । द्युऽमतः । आ । वह । पितॄन् । हविषे । अत्तवे ॥ ५७ ॥
अङ्गिरसः । नः । पितरः । नवऽग्वाः । अथर्वाणः । भृगवः । सोम्यासः ।
तेषाम् । वयम् । सुऽमतौ । यज्ञियानाम् । अपि । भद्रे । सौमनसे । स्याम ॥ ५८ ॥

## Tvaṣṭar

**XVIII.1.53** Tvaṣṭar makes a wedding-car for his daughter; by reason of this, all this creation comes together; the mother of Yama, wife of great Vivasvant, being drawn about, disappeared.

**XVIII.1.54** Go thou forth, go forth by roads that go to the stronghold, as thy Fathers of old went forth; both kings, reveling with svadha, shall thou see, Yama and god Varuna.

**XVIII.1.55** Go ye away, go asunder, and creep apart from here; for this man the Fathers have made this world; adorned with days, with waters, with rays, a rest Yama gives to him. [Also Ṛg.X.14.9]

**XVIII.1.56** Eager would we light thee, eager would we kindle; do thou, eager, bring the eager Gathers to eat the oblation.

**XVIII.1.57** Lightful would we light thee, lightfull would we kindle; do thou, lightful, bring the lightful Fathers to eat the oblation.

## To Yama and Fathers

**XVIII.1.58** The Añgirases, our navagva Fathers, the Atharvans, the Bhṛgus, soma-drinkers – may we be in the favor of those worshipful ones, likewise in their excellent well-willing. [Ṛg.X.14.6]

अङ्गिरोभिर्यज्ञियैरा गहीह यम वैरूपैरिह मादयस्व ।
विवस्वन्तं हुवे यः पिता तेस्मिन्बर्हिष्या निषद्य ॥५९॥
इमं यम प्रस्तरमा हि रोहाङ्गिरोभिः पितृभिः संविदानः ।
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन्हविषो मादयस्व ॥६०॥
इत एत उदारुहन्दिवस्पृष्ठान्यारुहन् ।
प्र भूर्जयो यथा पथा द्यामङ्गिरसो ययुः ॥६१॥ (६)

अङ्गिरःऽभिः । यज्ञियैः । आ । गहि । इह । यम । वैरूपैः । इह । मादयस्व ।
विवस्वन्तम् । हुवे । यः । पिता । ते अस्मिन् । बर्हिषि । आ । निऽसद्य ॥ ५९ ॥
इमम् । यम । प्रऽस्तरम् । आ । हि । रोह । अङ्गिरःऽभिः । पितृऽभिः । सम्ऽविदानः ।
आ । त्वा । मन्त्राः । कविऽशस्ताः । वहन्तु । एना । राजन् । हविषः । मादयस्व ॥ ६० ॥
इतः । एते । उत्ऽआरुहन् । दिवः । पृष्ठानि । आ । अरुहन् ।
प्र । भूःऽजयः । यथा । पथा । द्याम् । अङ्गिरसः । ययुः ॥ ६१ ॥

( २ ) द्वितीयं सूक्तम्

(१-६०) षष्टृचस्यास्य सूक्तस्याथर्वा ऋषिः । (१-३, ६-२८, ३०-३३, ३५-६०) प्रथमादितृचस्य षष्ठयादित्रयोविंशत्यृचां त्रिंश्यादिचतसृणां पञ्चत्रिंश्यादिषड्विंशतेश्च यमो मन्त्रोक्ताश्च, (४, ३४) चतुर्थीचतुस्त्रिंश्योरग्निः, (५) पञ्चम्या जातवेदाः, (२९) एकोनत्रिंश्याश्च पितरो देवताः । (१-३, ६, १४-१८, २०, २२-२३, २५, ३०, ३४, ३६, ४६, ४८, ५०-५२, ५६) प्रथमादितृचस्य षष्ठयाश्चतुर्दश्यादिपञ्चानां विंशीद्वाविंशीत्रयोविंशीपञ्चविंशीत्रिंशीचतुस्त्रिंशीषट्त्रिंशीषट्चत्वारिंश्यष्टचत्वारिंशीनां पञ्चाश्यादितृचस्य षट्पञ्चाश्याश्चानुष्टुप्, (४, ७, ९, १३) चतुर्थीसप्तमीनवमीत्रयोदशीनां जगती, (५, २६, ४९, ५७) पञ्चमीषड्विंश्येकोनपञ्चाशीसप्तपञ्चाशीनां भुरिक्त्रिष्टुप्, (८, १०-१२, २१, २७-२९, ३१-३३, ३५, ४७, ५३-५५, ५८-६०) अष्टम्या दशम्यादितृचस्यैकविंश्याः सप्तविंश्यादितृचस्यैकत्रिंश्यादितृचस्य पञ्चत्रिंशीसप्तचत्वारिंश्योस्त्रिपञ्चाश्यादितृचस्याष्टपञ्चाश्यादितृचस्य च त्रिष्टुप्, (१९) एकोनविंश्यास्त्रिपदार्षी गायत्री, (२४) चतुर्विंश्यास्त्रिपदा समविषमार्षी गायत्री, (३७) सप्तत्रिंश्या विराड्जगती, (३८-३९, ४१) अष्टात्रिंश्येकोनचत्वारिंश्येकचत्वारिंशीनामार्षी गायत्री, (४०, ४२-४४) चत्वारिंश्या द्विचत्वारिंश्यादितृचस्य च भुरिगार्षी गायत्री, (४५) पञ्चचत्वारिंश्याश्च ककुम्मत्यनुष्टुप् छन्दांसि ॥

यमाय सोमः पवते यमाय क्रियते हविः ।
यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः ॥१॥

यमाय । सोमः । पवते । यमाय । क्रियते । हविः ।
यमम् । ह । यज्ञः । गच्छति । अग्निऽदूतः । अरम्ऽकृतः ॥ १ ॥

**XVIII.1.59** Come thou hither with the worshipful Añgirases; revel here, O Yama, with the Vāirūpas — I call Vivasvant, who is thy father sitting down upon this barhis. [Ṛg X.14.5]

**XVIII.1.60** Ascend thou, O Yama, this cushion, in concord with the Añgiras Fathers; let the sacred utterances made in praise by the poets bring thee; then, O king, revel thou in the oblation. [Ṛg.X.14.4]

**XVIII.1.61** These ascended up from here; they ascended the backs of the sky; the Añgirases have gone forth to heaven, like bhūrjis, by the road.

## Yama

**XVIII.2.1** For Yama the soma purifies itself; for Yama is made the oblation; to Yama goes the sacrifice, messengered by Agni, made satisfactory.

यमाय मधुमत्तमं जुहोता प्र च तिष्ठत ।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥२॥
यमाय घृतवत्पयो राज्ञे हविर्जुहोतन ।
स नो जीवेष्वा यमेद्दीर्घमायुः प्र जीवसे ॥३॥
मैनमग्ने वि दहो माभि शूशुचो मास्य त्वचं चिक्षिपो मा शरीरम् ।
शृतं यदा करसि जातवेदोऽथेमेनं प्र हिणुतात्पितॄँरुप ॥४॥
यदा शृतं कृणवो जातवेदोऽथेममेनं परि दत्तात्पितृभ्यः ।
यदो गच्छात्यसुनीतिमेतामथ देवानां वशनीर्भवाति ॥५॥
त्रिकद्रुकेभिः पवते षडुर्वीरेकमिद्बृहत् ।
त्रिष्टुब्गायत्री छन्दांसि सर्वा ता यम आर्पिता ॥६॥
सूर्यं चक्षुषा गच्छ वातमात्मना दिवं च गच्छ पृथिवीं च धर्मभिः ।
अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रति तिष्ठा शरीरैः ॥७॥

यमाय । मधुमत्ऽतमम् । जुहोत । प्र । च । तिष्ठत ।
इदम् । नमः । ऋषिऽभ्यः । पूर्वऽजेभ्यः । पूर्वेभ्यः । पथिकृत्ऽभ्यः ॥ २ ॥
यमाय । घृतऽवत् । पयः । राज्ञे । हविः । जुहोतन ।
सः । नः । जीवेषु । आ । यमेत् । दीर्घम् । आयुः । प्र । जीवसे ॥ ३ ॥
मा । एनम् । अग्ने । वि । दहः । मा । अभि । शूशुचः । मा । अस्य । त्वचम् ।
चिक्षिपः । मा । शरीरम् । शृतम् । यदा । करसि । जातऽवेदः । अथ । ईम् । एनम् ।
प्र । हिनुतात् । पितॄन् । उप ॥ ४ ॥
यदा । शृतम् । कृणवः । जातऽवेदः । अथ । इमम् । एनम् । परि । दत्तात् । पितृऽभ्यः ।
यदो इति । गच्छाति । असुऽनीतिम् । एताम् । अथ । देवानाम् । वशऽनीः । भवाति ॥
त्रिऽकद्रुकेभिः । पवते । षट् । उर्वीः । एकम् । इत् । बृहत् ।
त्रिऽस्तुप् । गायत्री । छन्दांसि । सर्वा । ता । यमे । आर्पिता ॥ ६ ॥
सूर्यम् । चक्षुषा । गच्छ । वातम् । आत्मना । दिवम् । च । गच्छ । पृथिवीम् । च ।
धर्मऽभिः । अपः । वा । गच्छ । यदि । तत्र । ते । हितम् । ओषधीषु । प्रति । तिष्ठ । शरीरैः ॥७॥

**XVIII.2.2** Offer ye to Yama what is most honeyed, and stand forth; this homage to the former-born the former, the path-making seers.

**XVIII.2.3** Unto Yama the king offer ye an oblation, milk rich in ghee; he furnished to us among the living a long life-time, for living on.

### Agniḥ

**XVIII.2.4** Do not, O Agni, burn him up; do not be hot upon him; do not warp his skin, nor his body; when thou shalt make him done, O Jātavedas, then send him forward unto the Fathers.

### Jātaveda

**XVIII.2.5** When thou shalt make him done, O Jātavedas, then commit him to the Fathers; when he shall go to that other life, then shall he become a controller of the gods.

### Yama

**XVIII.2.6** With the trikadrukas it purifies itself; six wide ones, verily one great one; triṣṭubh, gāyatrī, the meters: all those (are) set in Yama.

**XVIII.2.7** Go thou to the sun with thine eye, to the wind with thy soul; go both to heaven and to earth with (their) due shares; or go to the waters, if there it is acceptable to thee; in the herbs stand firm with thy bodies.

अजो भागस्तपसस्तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः ।
यास्ते शिवास्तन्वो जातवेदस्ताभिर्वहैनं सुकृतामु लोकम् ॥८॥
यास्ते शोचयो रंहयो जातवेदो याभिरापृणासि दिवमन्तरिक्षम् ।
अजं यन्तमनु ताः समृण्वतामथेतराभिः शिवतमाभिः शृतं कृधि ॥९॥
अव सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधावान् ।
आयुर्वसान उप यातु शेषः सं गच्छतां तन्वा सुवर्चाः ॥१०॥ (७)
अति द्रव श्वानौ सारमेयौ चतुरक्षौ शबलौ साधुना पथा ।
अधा पितॄन्त्सुविदत्राँ अपीहि यमेन ये सधमादं मदन्ति ॥११॥
यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिषदी नृचक्षसा ।
ताभ्यां राजन्परि धेह्येनं स्वस्त्यस्मा अनमीवं च धेहि ॥१२॥
उरूणसावसुतृपावुदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु ।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् ॥१३॥

अजः । भागः । तपसः । तम् । तपस्व । तम् । ते । शोचिः । तपतु । तम् । ते । अर्चिः ।
याः । ते । शिवाः । तन्वः । जातऽवेदः । ताभिः । वह । एनम् । सुऽकृताम् । ऊं इति । लोकम् ॥
याः । ते । शोचयः । रंहयः । जातऽवेदः । याभिः । आऽपृणासि । दिवम् । अन्तरिक्षम् ।
अजम् । यन्तम् । अनु । ताः । सम् । ऋण्वताम् । अथ । इतराभिः । शिवऽतमाभिः । शृतम् । कृधि ॥
अव । सृज । पुनः । अग्ने । पितृऽभ्यः । यः । ते । आऽहुतः । चरति । स्वधाऽवान् ।
आयुः । वसानः । उप । यातु । शेषः । सम् । गच्छताम् । तन्वा । सुऽवर्चाः ॥ १० ॥
अति । द्रव । श्वानौ । सारमेयौ । चतुःऽअक्षौ । शबलौ । साधुना । पथा ।
अध । पितॄन् । सुऽविदत्रान् । अपि । इहि । यमेन । ये । सधऽमादम् । मदन्ति ॥ ११ ॥
यौ । ते । श्वानौ । यम । रक्षितारौ । चतुःऽअक्षौ । पथिसदी इति पथिऽसदी । नृऽचक्षसा ।
ताभ्याम् । राजन् । परि । धेहि । एनम् । स्वस्ति । अस्मै । अनमीवम् । च । धेहि ॥ १२ ॥
उरुऽनसौ । असुऽतृपौ । उदुम्बलौ । यमस्य । दूतौ । चरतः । जनान् । अनु ।
तौ । अस्मभ्यम् । दृशये । सूर्याय । पुनः । दाताम् । असुम् । अद्य । इह । भद्रम् ॥ १३ ॥

**XVIII.2.8** The goat is the share of the heat; heat thou that; that let thine ardor heat, that thy flame what propitious bodies are thine, O Jātavedas, with them carry him to the world of the well-doing.

**XVIII.2.9** What ardors, swiftnesses are thine, O Jātavedas, with which thou fillest the sky, the atmosphere, let them collect after the goat as he goes; then with other most propitious ones make him propitious.

**XVIII.2.10** Release again, O Agni, to the Fathers him who goes offered to thee, with svadha; clothing himself in life, let him go unto (his) posterity; let him be united with a body, very splendid.

**XVIII.2.11** Run thou past the two four-eyed, brindled dogs of Saramā, by a happy road; then go unto the beneficent Fathers, who revel in common revelry with Yama. [Also Rg X.14.10]

**XVIII.2.12** What two defending dogs thou hast, O Yama, four-eyed, sitting by the road, men watching with them, O king, do thou surround him; assign to him well-being and freedom from disease. [ Also Rg.X.14.11]

**XVIII.2.13** Broad-nosed, feeding on lives, copper-colored, Yama's two messengers go about after men; let them give us back here today excellent life, to see the sun. [Also Rg.X.14.12]

सोम एकेभ्यः पवते घृतमेक उपासते ।
येभ्यो मधु प्रधावति तांश्चिदेवापि गच्छतात् ॥१४॥
ये चित्पूर्व ऋतसाता ऋतजाता ऋतावृधः ।
ऋषीन्तपस्वतो यम तपोजाँ अपि गच्छतात् ॥१५॥
तपसा ये अनाधृष्यास्तपसा ये स्वर्ययुः ।
तपो ये चक्रिरे महस्तांश्चिदेवापि गच्छतात् ॥१६॥
ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः ।
ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात् ॥१७॥
सहस्रणीथाः कवयो ये गोपायन्ति सूर्यम् ।
ऋषीन्तपस्वतो यम तपोजाँ अपि गच्छतात् ॥१८॥
स्योनास्मै भव पृथिव्यनृक्षरा निवेशनी ।
यच्छास्मै शर्म सप्रथाः ॥१९॥

सोमः । एकेभ्यः । पवते । घृतम् । एके । उप । आसते ।
येभ्यः । मधु । प्रऽधावति । तान् । चित् । एव । अपि । गच्छतात् ॥ १४ ॥
ये । चित् । पूर्वे । ऋतऽसाताः । ऋतऽजाताः । ऋतऽवृधः ।
ऋषीन् । तपस्वतः । यम । तपःऽजान् । अपि । गच्छतात् ॥ १५ ॥
तपसा । ये । अनाधृष्याः । तपसा । ये । स्वः । ययुः ।
तपः । ये । चक्रिरे । महः । तान् । चित् । एव । अपि । गच्छतात् ॥ १६ ॥
ये । युध्यन्ते । प्रऽधनेषु । शूरासः । ये । तनूऽत्यजः ।
ये । वा । सहस्रऽदक्षिणाः । तान् । चित् । एव । अपि । गच्छतात् ॥ १७ ॥
सहस्रऽनीथाः । कवयः । ये । गोपायन्ति । सूर्यम् ।
ऋषीन् । तपस्वतः । यम । तपःऽजान् । अपि । गच्छतात् ॥ १८ ॥
स्योना । अस्मै । भव । पृथिवि । अनृक्षरा । निऽवेशनी ।
यच्छ । अस्मै । शर्म । सऽप्रथाः ॥ १९ ॥

**XVIII.2.14** Soma purifies itself for some; some wait upon ghee; for whom honey runs forward, unto them do thou go.

**XVIII.2.15** They who of old were won by right, born of right, increasers of right -- to the seers rich in fervor, born of fervor, O Yama, do thou go. [Also Rg.X.154.4]

**XVIII.2.16** They who by fervor are unassailable, who by fervor have gone to heaven who made fervor their greatness, unto them do thou go. [Also Rg.X.154.3]

**XVIII.2.17** They who fight in the contests, who are self-sacrificing heroes, or who give thousand-fold sacrificial gifts, unto them do thou go. [Also Rg.X.154.3]

**XVIII.2.18** Poets of a thousand lays, who guard the sun — to the seers rich in fervor, born of fervor, O Yama, do thou go. [Rg.x.154.5]

**XVIII.2.19** Be pleasant to him, O earth, a thornless resting-place; furnish him broad refuge.

असंबाधे पृथिव्या उरौ लोके नि धीयस्व ।
स्वधा याश्चकृषे जीवन्तास्ते सन्तु मधुश्चुतः ॥२०॥ (८)
ह्वयामि ते मनसा मन इहेमान्गृहाँ उप जुजुषाण एहि ।
सं गच्छस्व पितृभिः सं यमेन स्योनास्त्वा वाता उप वान्तु शग्माः ॥२१॥
उत्त्वा वहन्तु मरुत उदवाहा उदप्रुतः ।
अजेन कृण्वन्तः शीतं वर्षेणोक्षन्तु बालिति ॥२२॥
उदह्वमायुरायुषे क्रत्वे दक्षाय जीवसे । स्वान्गच्छतु ते मनो अधा पितृँरुप द्रव ॥२३॥
मा ते मनो मासोर्माङ्गानां मा रसस्य ते । मा ते हास्त तन्वः किं चनेह ॥२४॥
मा त्वा वृक्षः सं बाधिष्ट मा देवी पृथिवी मही । लोकं पितृषु वित्त्वैधस्व यमराजसु ॥२५॥

असम्ऽबाधे । पृथिव्याः । उरौ । लोके । नि । धीयस्व ।
स्वधाः । याः । चकृषे । जीवन् । ताः । ते । सन्तु । मधुऽश्चुतः ॥ २० ॥

ह्वयामि । ते । मनसा । मनः । इह । इमान् । गृहान् । उप । जुजुषाणः । आ । इहि ।
सम् । गच्छस्व । पितृऽभिः । सम् । यमेन । स्योनाः । त्वा । वाताः । उप । वान्तु । शग्माः ॥

उत् । त्वा । वहन्तु । मरुतः । उदऽवाहाः । उदऽप्रुतः ।
अजेन । कृण्वन्तः । शीतम् । वर्षेण । उक्षन्तु । बाल् । इति ॥ २२ ॥

उत् । अह्वम् । आयुः । आयुषे । क्रत्वे । दक्षाय । जीवसे ।
स्वान् । गच्छतु । ते । मनः । अध । पितॄन् । उप । द्रव ॥ २३ ॥

मा । ते । मनः । मा । असोः । मा । अङ्गानाम् । मा । रसस्य । ते ।
मा । ते । हास्त । तन्वः । किम् । चन । इह ॥ २४ ॥

मा । त्वा । वृक्षः । सम् । बाधिष्ट । मा । देवी । पृथिवी । मही ।
लोकम् । पितृषु । वित्त्वा । एधस्व । यमराजऽसु ॥ २५ ॥

**XVIII.2.20** In the unoppressive wide space of earth be thou deposited; what svadhās thou didst make when living, be they dripping with honey for thee.

**XVIII.2.21** I call thy mind hither with mind; come unto these houses, enjoying (them); unite thyself with the Fathers, with Yama; let pleasant, helpful winds blow thee unto (them).

**XVIII.2.22** Let the water-carrying, water-floating Maruts carry thee up, making (thee) with rain, splash.

**XVIII.2.23** I have called up life-time unto life-time, unto ability, unto dexterity, unto life; let thy mind go to its own; then run unto the Fathers.

**XVIII.2.24** Let nothing whatever of thy mind, nor of thy life, nor of thy members, nor of thy sap, nor of thy body, be left here.

**XVIII.2.25** Let not the tree oppress thee, nor the great divine earth; having found a place among the Fathers, thrive thou among those whose king is Yama.

यत्ते अङ्गमतिंहितं पराचैरपानः प्राणो य उं वा ते परेतः ।
तत्ते संगत्य पितरः सनींडा घासाद्घासं पुनरा वेशयन्तु ॥२६॥
अपेमं जीवा अरुधन्गृहेभ्यस्तं निर्वहत परि ग्रामादितः ।
मृत्युर्यमस्यासीद्दूतः प्रचेता असून्पितृभ्यो गमयां चकार ॥२७॥
ये दस्यवः पितृषु प्रविष्टा ज्ञातिमुखा अहुतादश्चरन्ति ।
परापुरो निपुरो ये भरन्त्यग्निष्टानस्मात्प्र धमाति यज्ञात् ॥२८॥
सं विशन्त्विह पितरः स्वा नः स्योनं कृण्वन्तः प्रतिरन्त आयुः ।
तेभ्यः शकेम हविषा नक्षमाणा ज्योग्जीवन्तः शरदः पुरूचीः ॥२९॥
यां ते धेनुं निपृणामि यमु ते क्षीर ओदनम् ।
तेना जनस्यासो भर्ता योत्रासदजीवनः ॥३०॥ (६)
अश्वावतीं प्र तर या सुशेवार्क्षाकं वा प्रतरं नवीयः ।
यस्त्वा जघान वध्यः सो अस्तु मा सो अन्यद्विदत भागधेयम् ॥३१॥

यत् । ते । अङ्गम् । अतिंऽहितम् । पराचैः । अपानः । प्राणः । यः । ऊं इति । वा । ते । पराऽइतः । तत् । ते । सम्ऽगत्य । पितरः । सऽनीडाः । घासात् । घासम् । पुनः । आ । वेशयन्तु ॥
अप । इमम् । जीवाः । अरुधन् । गृहेभ्यः । तम् । निः । वहत । परि । ग्रामात् । इतः ।
मृत्युः । यमस्य । आसीत् । दूतः । प्रऽचेताः । असून् । पितृऽभ्यः । गमयाम् । चकार ॥ २७ ॥
ये । दस्यवः । पितृषु । प्रऽविष्टाः । ज्ञातिऽमुखाः । अहुतऽअदः । चरन्ति ।
पराऽपुरः । निऽपुरः । ये । भरन्ति । अग्निः । तान् । अस्मात् । प्र । धमाति । यज्ञात् ॥२८॥
सम् । विशन्तु । इह । पितरः । स्वाः । नः । स्योनम् । कृण्वन्तः । प्रऽतिरन्तः । आयुः ।
तेभ्यः । शकेम । हविषा । नक्षमाणाः । ज्योक् । जीवन्तः । शरदः । पुरूचीः ॥ २९ ॥
याम् । ते । धेनुम् । निऽपृणामि । यम् । ऊं इति । ते । क्षीरे । ओदनम् ।
तेन । जनस्य । असः । भर्ता । यः । अत्र । असत् । अजीवनः ॥ ३० ॥
अश्वऽवतीम् । प्र । तर । या । सुऽशेवा । ऋक्षाकम् । वा । प्रऽतरम् । नवीयः ।
यः । त्वा । जघान । वध्यः । सः । अस्तु । मा । सः । अन्यत् । विदत । भागऽधेयम् ॥३१॥

**XVIII.2.26** What limb of thine is put over at a distance, and what expiration (or) breath has gone forth upon the wind; let the associated Fathers, assembling, make that enter thee again, bit from bit.

**XVIII.2.27** The living have excluded this man from their houses; carry ye him out, forth from this village; death was the kindly messenger of Yama; he made his life-breaths go to the Fathers.

**XVIII.2.28** What barbarians, having entered among the Fathers, having faces of acquaintances, go about, eating what is not sacrificed, who bear parāpur (and) nipur — Agni shall blast them forth from this sacrifice.

**Pitraḥ**

**XVIII.2.29** Let there enter together here our own Fathers, doing what is pleasant, lengthening (our) life-time; may we be able to reach them with oblation, living long for numerous autumns.

**Yama**

**XVIII.2.30** What milch-cow I set down for thee, and what rice-dish for thee in milk – with that mayest thou be the supporter of the person who is there without a living.

**XVIII.2.31** Pass forward (over a stream) rich in horses, which is very propitious, or, further on, and ṛkṣāka, more new; he who slew thee, be he one to be killed; let him not find any other portion.

यमः परोवरो विवस्वान्ततः परं नाति पश्यामि किं चन ।
यमे अध्वरो अधि मे निविष्टो भुवो विवस्वानन्वाततान ॥३२॥
अपागूहन्नमृतां मर्त्येभ्यः कृत्वा सवर्णामदधुर्विवस्वते ।
उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः ॥३३॥
ये निखाता ये परोप्ता ये दग्धा ये चोद्धिताः ।
सर्वांस्तानग्न आ वह पितॄन्हविषे अत्तवे ॥३४॥
ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिवः स्वधया मादयन्ते ।
त्वं तान्वेत्थ यदि ते जातवेदः स्वधया यज्ञं स्वधितिं जुषन्ताम् ॥३५॥
शं तप माति तपो अग्ने मा तन्वं१ तपः ।
वनेषु शुष्मो अस्तु ते पृथिव्यामस्तु यद्धरः ॥३६॥
ददाम्यस्मा अवसानमेतद्य एष आगन्मम चेदभूदिह ।
यमश्चिकित्वान्प्रत्येतदाह ममैष राय उप तिष्ठतामिह ॥३७॥

यमः । परः । अवरः । विवस्वान् । ततः । परम् । न । अति । पश्यामि । किम् । चन ।
यमे । अध्वरः । अधि । मे । निऽविष्टः । भुवः । विवस्वान् । अनुऽआततान ॥ ३२ ॥
अप । अगूहन् । अमृताम् । मर्त्येभ्यः । कृत्वा । सऽवर्णाम् । अदधुः । विवस्वते ।
उत । अश्विनौ । अभरत् । यत् । तत् । आसीत् । अजहात् । ऊं इति । द्वा । मिथुना । सरण्यूः ॥
ये । निऽखाताः । ये । पराऽउप्ताः । ये । दग्धाः । ये । च । उद्धिताः ।
सर्वान् । तान् । अग्ने । आ । वह । पितॄन् । हविषे । अत्तवे ॥ ३४ ॥
ये । अग्निऽदग्धाः । ये । अनग्निऽदग्धाः । मध्ये । दिवः । स्वधया । मादयन्ते ।
त्वम् । तान् । वेत्थ । यदि । ते । जातऽवेदः । स्वधया । यज्ञम् । स्वऽधितिम् । जुषन्ताम् ॥३५॥
शम् । तप । मा । अति । तपः । अग्ने । मा । तन्वम् । तपः ।
वनेषु । शुष्मः । अस्तु । ते । पृथिव्याम् । अस्तु । यत् । हरः ॥ ३६ ॥
ददामि । अस्मै । अवऽसानम् । एतत् । यः । एषः । आऽअगन् । मम । च । इत् ।
अभूत् । इह । यमः । चिकित्वान् । प्रति । एतत् । आह । मम । एषः । राये ।
उप । तिष्ठताम् । इह ॥ ३७ ॥

**XVIII.2.32** Yama beyond, below Vivasvant – beyond that do I see nothing whatever; into Yama has entered my sacrifice; Vivasvant stretched after the worlds.

**XVIII.2.33** They hid away the immortal one from mortals; having made one of like color, they gave her to Vivasvant; what that was carried also the two Aśvins; and Saraṇyū deserted two twins.

**Agnih**

**XVIII.2.34** They that are buried, and they that are scattered away, they that are burned and they that are set up – all those Fathers, O Agni, bring thou to eat the oblation.

**Yama**

**XVIII.2.35** They who, burned with fire, (and) who, not burned with fire, revel on svadhā in the midst of heaven – them thou knowest, if thine, O Jātavedaṣ; let them enjoy with svadhā the sacrifice, the svadh iti..

**XVIII.2.36** Burn thou propitiously; do not burn evermuch; O Agni, do not burn the body; be thy vehemence in the woods; on the earth be what is thy violence.

**XVIII.2.37** I give this release to him who hath thus come and hath become mine here – thus replies the knowing Yama – let this one approach my wealth here.

इमां मात्रां मिमीमहे यथापरं न मासातै । शते शरत्सु नो पुरा ॥३८॥
प्रेमां मात्रां मिमीमहे यथापरं न मासातै । शते शरत्सु नो पुरा ॥३९॥
अपेमां मात्रां मिमीमहे यथापरं न मासातै । शते शरत्सु नो पुरा ॥४०॥ (१०)
वी३मां मात्रां मिमीमहे यथापरं न मासातै । शते शरत्सु नो पुरा ॥४१॥
निरिमां मात्रां मिमीमहे यथापरं न मासातै । शते शरत्सु नो पुरा ॥४२॥
उदिमां मात्रां मिमीमहे यथापरं न मासातै । शते शरत्सु नो पुरा ॥४३॥
समिमां मात्रां मिमीमहे यथापरं न मासातै । शते शरत्सु नो पुरा ॥४४॥

इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै । शते । शरत्ऽसु । नो इति । पुरा ॥ ३८ ॥

प्र । इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै । शते । शरत्ऽसु । नो इति । पुरा ॥ ३९ ॥

अप । इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै । शते । शरत्ऽसु । नो इति । पुरा ॥ ४० ॥

वि । इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै । शते । शरत्ऽसु । नो इति । पुरा ॥ ४१ ॥

निः । इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै । शते । शरत्ऽसु । नो इति । पुरा ॥ ४२ ॥

उत् । इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै । शते । शरत्ऽसु । नो इति । पुरा ॥ ४३ ॥

सम् । इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै । शते । शरत्ऽसु । नो इति । पुरा ॥ ४४ ॥

**XVIII.2.38** This measure do we measure, so that one may not measure further; in a hundred autumns, not before.

**XVIII.2.39** This measures do we measure forth, so that etc.etc.

**XVIII.2.40** This measures do we measure off, so that etc.etc.

**XVIII.2.41** This measures do we measure apart, so that etc.etc.

**XVIII.2.42** This measures do we measure out, so that etc.etc.

**XVIII.2.43** This measures do we measure up, so that etc.etc.

**XVIII.2.44** This measures do we measure together, so that etc.etc.

अमासि मात्रां स्वरगामायुष्मान्भूयासम् । यथापरं न मासातै शते शरत्सु नो पुरा ॥४५॥
प्राणो अपानो व्यान आयुश्चक्षुर्दृशये सूर्याय । अपरिपरेण पथा यमराज्ञः पितॄन्गच्छ ॥४६॥
ये अग्रवः शशमानाः परेयुर्हित्वा द्वेषांस्यनपत्यवन्तः ।
ते द्यामुदित्याविदन्त लोकं नाकस्य पृष्ठे अधि दीध्यानाः ॥४७॥
उदन्वती द्यौरवमा पीलुमतीति मध्यमा ।
तृतीया ह प्रद्यौरिति यस्यां पितर आसते ॥४८॥
ये नः पितुः पितरो ये पितामहा य आविविशुरुर्व१न्तरिक्षम् ।
य आक्षियन्ति पृथिवीमुत द्यां तेभ्यः पितृभ्यो नमसा विधेम ॥४९॥
इदमिद्वा उ नापरं दिवि पश्यसि सूर्यम् । माता पुत्रं यथा सिचाभ्येनं भूम ऊर्णुहि ॥५०॥ (११)
इदमिद्वा उ नापरं जरस्यन्यदितोपरम् । जाया पतिमिव वाससाभ्येनं भूम ऊर्णुहि ॥५१॥

अमासि । मात्राम् । स्वः । अगाम् । आयुष्मान् । भूयासम् ।
यथा । अपरम् । न । मासातै । शते । शरत्ऽसु । नो इति । पुरा ॥ ४५ ॥
प्राणः । अपानः । विऽआनः । आयुः । चक्षुः । दृशये । सूर्याय ।
अपरिऽपरेण । पथा । यमऽराज्ञः । पितॄन् । गच्छ ॥ ४६ ॥

ये । अग्रवः । शशमानाः । पराऽईयुः । हित्वा । द्वेषांसि । अनपत्यऽवन्तः ।
ते । द्याम् । उत्ऽइत्य । अविदन्त । लोकम् । नाकस्य । पृष्ठे । अधि । दीध्यानाः ॥ ४७ ॥

उदन्ऽवती । द्यौः । अवमा । पीलुऽमती । इति । मध्यमा ।
तृतीया । ह । प्रऽद्यौः । इति । यस्याम् । पितरः । आसते ॥ ४८ ॥

ये । नः । पितुः । पितरः । ये । पितामहाः । ये । आऽविविशुः । उरु । अन्तरिक्षम् ।
ये । आऽक्षियन्ति । पृथिवीम् । उत । द्याम् । तेभ्यः । पितृभ्यः । नमसा । विधेम ॥४९॥

इदम् । इत् । वै । ऊं इति । न । अपरम् । दिवि । पश्यसि । सूर्यम् ।
माता । पुत्रम् । यथा । सिचा । अभि । एनम् । भूमे । ऊर्णुहि ॥ ५० ॥

इदम् । इत् । वै । ऊं इति । न । अपरम् । जरसि । अन्यत् । इतः । अपरम् ।
जाया । पतिम्ऽइव । वाससा । अभि । एनम् । भूमे । ऊर्णुहि ॥ ५१ ॥

**XVIII.2.45** I have measured the measure, I have gone to heaven; may I be long-lived; so that etc.etc.

**XVIII.2.46** Breath, expiration, through-breathing, life-time, an eye to see the sun: by a road not beset with enemies go thou to the Fathers whose king is Yama.

**XVIII.2.47** They that departed unmarried (but) assiduous, abandoning hatreds, having no progeny – they, going up to heaven, have found a place, (they) shining upon the back of the firmament.

**XVIII.2.48** Watery is the lowest heaven, full of stars is called the midmost; the third is called the fore-heaven, in which the Fathers sit.

**XVIII.2.49** They that are our Father's fathers, that are (his) grandfathers, that entered the wide atmosphere, they that dwell upon earth and heaven – to those Fathers would we pay worship with homage.

**XVIII.2.50** This time, verily, not further, seest thou the sun in the heaven; as a mother her son with her hem, do thou cover him, O earth.

**XVIII.2.51** This time, verily; not further; in old age another further than this; as a wife her husband with her garment, do thou cover him, O earth.

अभि त्वोर्णोमि पृथिव्या मातुर्वस्त्रेण भद्रया ।
जीवेषु भद्रं तन्मयि स्वधा पितृषु सा त्वयि ॥५२॥
अग्नीषोमा पथिकृता स्योनं देवेभ्यो रत्नं दधथुर्वि लोकम् ।
उप प्रेष्यन्तं पूषणं यो वहात्यञ्जोयानैः पथिभिस्तत्र गच्छतम् ॥५३॥
पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः ।
स त्वैतेभ्यः परि ददत्पितृभ्योग्निर्देवेभ्यः सुविदत्रियेभ्यः ॥५४॥
आयुर्विश्वायुः परि पातु त्वा पूषा त्वा पातु प्रपथे पुरस्तात् ।
यत्रासते सुकृतो यत्र त ईयुस्तत्र त्वा देवः सविता दधातु ॥५५॥
इमौ युनज्मि ते वह्नी असुनीताय वोढवे ।
ताभ्यां यमस्य सादनं समितीश्चाव गच्छतात् ॥५६॥
एतत्त्वा वासः प्रथमं न्वागन्नपैतदूह यदिहाबिभः पुरा ।
इष्टापूर्तमनुसंक्राम विद्वान्यत्र ते दत्तं बहुधा विबन्धुषु ॥५७॥

अभि । त्वा । ऊर्णोमि । पृथिव्याः । मातुः । वस्त्रेण । भद्रया ।
जीवेषु । भद्रम् । तत् । मयि । स्वधा । पितृषु । सा । त्वयि ॥ ५२ ॥
अग्नीषोमा । पथिऽकृता । स्योनम् । देवेभ्यः । रत्नम् । दधथुः । वि । लोकम् ।
उप । प्र । ईष्यन्तम् । पूषणम् । यः । वहाति । अञ्जःऽयानैः । पथिऽभिः । तत्र । गच्छतम् ॥
पूषा । त्वा । इतः । च्यवयतु । प्र । विद्वान् । अनष्टऽपशुः । भुवनस्य । गोपाः ।
सः । त्वा । एतेभ्यः । परि । ददत् । पितृऽभ्यः । अग्निः । देवेभ्यः । सुऽविदत्रियेभ्यः ॥ ५४ ॥
आयुः । विश्वऽआयुः । परि । पातु । त्वा । पूषा । त्वा । पातु । प्रऽपथे । पुरस्तात् ।
यत्र । आसते । सुऽकृतः । यत्र । ते । ईयुः । तत्र । त्वा । देवः । सविता । दधातु ॥ ५५ ॥
इमौ । युनज्मि । ते । वह्नी इति । असुऽनीताय । वोढवे ।
ताभ्याम् । यमस्य । सदनम् । सम्ऽइतीः । च । अव । गच्छतात् ॥ ५६ ॥
एतत् । त्वा । वासः । प्रथमम् । नु । आ । अगन् । अप । एतत् । ऊह । यत् । इह ।
अबिभः । पुरा । इष्टापूर्तम् । अनुऽसंक्राम । विद्वान् । यत्र । ते । दत्तम् । बहुऽधा । विऽबन्धुषु ॥

**XVIII.2.52** I cover thee excellently with the garment of mother earth; what is excellent among the living, that with me; svādha among the Fathers, that with thee.

**XVIII.2.53** O Agni and Soma, makers of roads, ye have distributed to the gods a pleasant treasure (and) world; send ye unto (us) Pūṣan, who shall carry by goat-traveled roads him that goes thither.

**XVIII.2.54** Let Pūṣan, knowing, urge thee forth from here—he, the shepherd of creation who loses no cattle; may he commit thee to those Fathers, (and) Agni to the beneficent gods.

**XVIII.2.55** May life-time, having all life-time, protect thee about; let Pūṣhan protect thee in front on the forward road; where sit the well-doers, whither they have gone, there let god Savitar set thee.

**XVIII.2.56** I yoke for thee these two conveyers (vāhni), to convey thee to the other life; with them to Yama's seat and to the assemblies go thou down.

**XVIII.2.57** This garment hath now come first to thee; remove that one which thou didst wear here before; knowing, do thou follow along with what is offered and bestowed, where it is given thee variously among them of various connection.

अग्नेर्वर्म परि गोभिर्व्ययस्व सं प्रोर्णुष्व मेदसा पीवसा च ।
नेत्त्वा धृष्णुर्हरसा जर्हृषाणो दधृग्विधक्षन्परीङ्खयातै ॥५८॥
दण्डं हस्तादाददानो गतासोः सह श्रोत्रेण वर्चसा बलेन ।
अत्रैव त्वमिह वयं सुवीरा विश्वा मृधो अभिमातीर्जयेम ॥५९॥
धनुर्हस्तादाददानो मृतस्य सह क्षत्रेण वर्चसा बलेन ।
समागृभाय वसु भूरि पुष्टमर्वाङ् त्वमेह्युप जीवलोकम् ॥६०॥ (१२)

अग्नेः । वर्म । परि । गोभिः । व्ययस्व । सम् । प्र । ऊर्णुष्व । मेदसा । पीवसा । च ।
न । इत् । त्वा । धृष्णुः । हरसा । जर्हृषाणः । दधृक् । विऽधक्षन् । परिऽईङ्खयातै ॥५८॥
दण्डम् । हस्तात् । आऽददानः । गतऽअसोः । सह । श्रोत्रेण । वर्चसा । बलेन ।
अत्र । एव । त्वम् । इह । वयम् । सुऽवीराः । विश्वाः । मृधः । अभिऽमातीः । जयेम ॥ ५९ ॥
धनुः । हस्तात् । आऽददानः । मृतस्य । सह । क्षत्रेण । वर्चसा । बलेन ।
सम्ऽआगृभाय । वसु । भूरि । पुष्टम् । अर्वाङ् । त्वम् । आ । इहि । उप । जीवऽलोकम् ॥ ६० ॥

( ३ ) तृतीयं सूक्तम्

(१-७३) त्रिसप्तत्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । (१-४, ७-४३, ४५, ४७-४९, ५१-५३, ५५, ५७-७३) प्रथमादिचतुर्ऋचां सप्तम्यादिसप्तत्रिंशतः पञ्चचत्वारिंश्याः सप्तचत्वारिंश्यादितृचस्यैकपञ्चाश्यादितृचस्य पञ्चपञ्चाश्याः सप्तपञ्चाश्यादिसप्तदशानाञ्च यमो मन्त्रोक्ताश्च, (५-६) पञ्चमीषष्ठ्योरग्निः, (४४, ४६) चतुश्चत्वारिंशीषट्चत्वारिंश्योर्मन्त्रोक्ताः, (५०) पञ्चाश्या भूमिः, (५४) चतुष्पञ्चाश्या इन्दुः, (५६) षट्पञ्चाश्याश्च आपो देवताः । (१-३, ७, ९-१०, १२-१७, १९-२२, २४, ३८, ४०-४३, ४५, ४८, ५१, ५३, ५५, ५७, ५९, ६१-६३, ६५-६६, ७३) प्रथमादितृचस्य सप्तमीनवमीदशमीनां द्वादश्यादिषण्णामेकोनविंश्यादिचतसृणां चतुर्विंश्यष्टात्रिंश्योश्चत्वारिंश्यादिचतसृणां पञ्चचत्वारिंश्यष्टचत्वारिंश्येकपञ्चाशीत्रिपञ्चाशीपञ्चपञ्चाशीसप्तपञ्चाश्येकोनषष्टीनामेकषष्ट्यादितृचस्य पञ्चषष्टीषट्षष्टीत्रिसप्ततितमानाञ्च त्रिष्टुप्, (४, ८, ११, २३) चतुर्थ्यष्टम्येकादशीत्रयोविंशीनां सतःपङ्क्तिः, (५) पञ्चम्यास्त्रिपदा निचृद्गायत्री, (६, ५६, ६८, ७०, ७२) षष्ठीषट्पञ्चाश्यष्टषष्टीसप्ततितमाद्वासप्ततितमानाञ्चानुष्टुप्, (२५, २७, ४४, ४६) पञ्चविंशीसप्तविंशीचतुश्चत्वारिंशीषट्चत्वारिंशीनां जगती, (२६, २८) षड्विंश्यष्टाविंश्योर्भुरिग्जगती, (२९) एकोनत्रिंश्या विराड्जगती, (३०) त्रिंश्याः पञ्चपदातिजगती, (३१) एकत्रिंश्या विराट् शक्करी, (३२-३५, ४७, ४९, ५२) द्वात्रिंश्यादिचतसृणां सप्तचत्वारिंश्येकोनपञ्चाशीद्विपञ्चाशीनां [(१८) अष्टादश्याश्च] भुरिक्त्रिष्टुप्, (३६) षट्त्रिंश्या एकावसानासुर्यनुष्टुप्, (३७) सप्तत्रिंश्या एकावसानासुरी गायत्री, (३९) एकोनचत्वारिंश्याः परात्रिष्टुप् पङ्क्तिः, (५०) पञ्चाश्याः प्रस्तारपङ्क्तिः, (५४) चतुष्पञ्चाश्याः पुरोऽनुष्टुप्त्रिष्टुप्, (५८) अष्टपञ्चाश्या विराट्त्रिष्टुप्, (६०) षष्ट्यास्त्र्यवसाना षट्पदा जगती, (६४) चतुःषष्ट्या भुरिक्पथ्यापङ्क्तिर्भुरिगार्षी पङ्क्तिर्वा, (६७) सप्तषष्ट्याः पथ्याबृहती, (६९, ७१) एकोनसप्ततितमैकसप्ततितमयोश्चोपरिष्टाद्बृहती छन्दांसि ॥

इयं नारी पतिलोकं वृणाना नि पद्यत उप त्वा मर्त्य प्रेतम् ।
धर्मं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणं चेह धेहि ॥१॥
इयम् । नारी । पतिऽलोकम् । वृणाना । नि । पद्यते । उप । त्वा । मर्त्य । प्रऽइतम् ।
धर्मम् । पुराणम् । अनुऽपालयन्ती । तस्यै । प्रऽजाम् । द्रविणम् । च । इह । धेहि ॥ १ ॥

**XVIII.2.58** Wrap about thee of kine a protection from the fire; cover thyself up with grease and fatness, lest the bold one, exulting with violence, shake thee strongly about, intending to consume thee.

**XVIII.2.59** Taking the staff from the hand of the deceased man, together with hearing, splendor, strength—thou just there, here may we, rich in heroes, conquer all scorners (and) evil plotters.

**XVIII.2.60** Taking the bow from the hand of the dead man, together with authority, splendor, strength—take thou hold upon much prosperous good; come thou hitherward unto the world of the living.

## Yama

**XVIII.3.1** This woman choosing her husband's world, lies down by thee that art departed, O mortal, continuing to keep (her) ancient duty; to her assign thou here progeny and property.

उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहि ।
हस्तग्राभस्य दधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ ॥२॥
अपश्यं युवतिं नीयमानां जीवां मृतेभ्यः परिणीयमानाम् ।
अन्धेन यत्तमसा प्रावृतासीत्प्राक्तो अपाचीमनयं तदेनाम् ॥३॥
प्रजानत्यघ्न्ये जीवलोकं देवानां पन्थामनुसंचरन्ती ।
अयं ते गोपतिस्तं जुषस्व स्वर्गं लोकमधि रोहयैनम् ॥४॥
उप द्यामुप वेतसमवत्तरो नदीनाम् । अग्ने पित्तमपामसि ॥५॥
यं त्वमग्ने समदहस्तमु निर्वापया पुनः ।
क्याम्बूरत्र रोहतु शाण्डदूर्वा व्यल्किशा ॥६॥
इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा सं विशस्व ।
संवेशने तन्वा३ चारुरेधि प्रियो देवानां परमे सधस्थे ॥७॥

उत् । ईर्ष्व । नारि । अभि । जीवऽलोकम् । गतऽअसुम् । एतम् । उप । शेषे । आ । इहि ।
हस्तऽग्राभस्य । दधिषोः । तव । इदम् । पत्युः । जनिऽत्वम् । अभि । सम् । बभूथ ॥ २ ॥
अपश्यम् । युवतिम् । नीयमानाम् । जीवाम् । मृतेभ्यः । परिऽनीयमानाम् । अन्धेन ।
यत् । तमसा । प्रावृता । आसीत् । प्राक्तः । अपाचीम् । अनयम् । तत् । एनाम् ॥ ३ ॥
प्रऽजानती । अघ्न्ये । जीवऽलोकम् । देवानाम् । पन्थाम् । अनुऽसंचरन्ती ।
अयम् । ते । गोऽपतिः । तम् । जुषस्व । स्वःऽगम् । लोकम् । अधि । रोहय । एनम् ॥४॥
उप । द्याम् । उप । वेतसम् । अवत्ऽतरः । नदीनाम् । अग्ने । पित्तम् । अपाम् । असि ॥
यम् । त्वम् । अग्ने । समऽअदहः । तम् । ऊं इति । निः । वापय । पुनः ।
क्याम्बूः । अत्र । रोहतु । शाण्डऽदूर्वा । विऽअल्कशा ॥ ६ ॥
इदम् । ते । एकम् । परः । ऊं इति । ते । एकम् । तृतीयेन । ज्योतिषा । सम् । विशस्व ।
समऽवेशने । तन्वा३ । चारुः । एधि । प्रियः । देवानाम् । परमे । सधऽस्थे ॥ ७ ॥

**XVIII.3.2** Go up, O woman, to the world of the living; thou liest by this one who is deceased: come to him who grasps thy hand, thy second spouse thou hast now entered into the relation of wife to husband.

**XVIII.3.3** I saw the maiden being led, being led about, alive, for the dead; as she was enclosed with blind darkness, then I let her off-ward from in front.

**XVIII.3.4** Foreknowing, O inviolable one, the world of the living, moving together (with him) upon the road of the gods – this is thy herdsman; enjoy him; make him ascend to the heavenly world.

### Agni

**XVIII.3.5** Unto sky, unto reed, more helpful of streams; O Agni, gall of the waters art thou.

**XVIII.3.6** Whom thou, O Agni, didst consume, him do thou extinguish again; let there grow here the kyāmbū, the śandadūrva, the vyalkaśā.

### Yama

**XVIII.3.7** Here is one for thee, beyond is one for thee; enter thou into union with the third light; at entrance be thou fair with (thy) body, loved of the gods in the highest station.

उत्तिष्ठ प्रेहि प्र द्रवौकः कृणुष्व सलिले सधस्थे ।
तत्र त्वं पितृभिः संविदानः सं सोमेन मदस्व सं स्वधाभिः ॥८॥
प्र च्यवस्व तन्वं सं भरस्व मा ते गात्रा वि हायि मो शरीरम् ।
मनो निविष्टमनुसंविशस्व यत्र भूमेर्जुषसे तत्र गच्छ ॥९॥
वर्चसा मां पितरः सोम्यासो अञ्जन्तु देवा मधुना घृतेन ।
चक्षुषे मा प्रतरं तारयन्तो जरसे मा जरदष्टिं वर्धन्तु ॥१०॥
वर्चसा मां समनक्त्वग्निर्मेधां मे विष्णुर्न्यनक्त्वासन् ।
रयिं मे विश्वे नि यच्छन्तु देवाः स्योना मापः पवनैः पुनन्तु ॥११॥
मित्रावरुणा परि मामधातामादित्या मा स्वरवो वर्धयन्तु ।
वर्चो म इन्द्रो न्यनक्तु हस्तयोर्जरदष्टिं मा सविता कृणोतु ॥१२॥
यो ममार प्रथमो मर्त्यानां यः प्रेयाय प्रथमो लोकमेतम् ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा सपर्यत ॥१३॥

उत् । तिष्ठ । प्र । इहि । प्र । द्रव । ओकः । कृणुष्व । सलिले । सधऽस्थे ।
तत्र । त्वम् । पितृऽभिः । सम्ऽविदानः । सम् । सोमेन । मदस्व । सम् । स्वधाभिः ॥ ८ ॥
प्र । च्यवस्व । तन्वम् । सम् । भरस्व । मा । ते । गात्रा । वि । हायि । मो इति । शरीरम् ।
मनः । निऽविष्टम् । अनुऽसंविशस्व । यत्र । भूमेः । जुषसे । तत्र । गच्छ ॥ ९ ॥
वर्चसा । माम् । पितरः । सोम्यासः । अञ्जन्तु । देवाः । मधुना । घृतेन ।
चक्षुषे । मा । प्रऽतरम् । तारयन्तः । जरसे । मा । जरत्ऽअष्टिम् । वर्धन्तु ॥ १० ॥
वर्चसा । माम् । सम् । अनक्तु । अग्निः । मेधाम् । मे । विष्णुः । नि । अनक्तु । आसन् ।
रयिम् । मे । विश्वे । नि । यच्छन्तु । देवाः । स्योनाः । मा । आपः । पवनैः । पुनन्तु ॥ ११ ॥
मित्रावरुणा । परि । माम् । अधाताम् । आदित्याः । मा । स्वरवः । वर्धयन्तु ।
वर्चः । मे । इन्द्रः । नि । अनक्तु । हस्तयोः । जरत्ऽअष्टिम् । मा । सविता । कृणोतु ॥१२॥
यः । ममार । प्रथमः । मर्त्यानाम् । यः । प्रऽइयाय । प्रथमः । लोकम् । एतम् ।
वैवस्वतम् । सम्ऽगमनम् । जनानाम् । यमम् । राजानम् । हविषा । सपर्यत ॥ १३ ॥

**XVIII.3.8** Rise thou, go forth, run forth; make thee a home in the sea (as) station: there do thou, in concord with the Fathers, revel with soma with the svadhās.

**XVIII.3.9** Start forward, collect thy body; let not thy limbs nor thy frame be left out; enter together after thy mind that has entered; wherever in the world thou enjoyest, thither go.

**XVIII.3.10** Let the soma-drinking Fathers anoint me with splendor, the gods with honey, with ghee; making me pass further on unto sight, let them increase me, attaining old age, unto old age.

**XVIII.3.11** Let Agni anoint completely with splendor; let Vishnu anoint wisdom into my mouth; let all the gods fix wealth upon me; let pleasant waters purify me with purifiers.

**XVIII.3.12** Mitra and Varuna have enclosed me; let the sacrificial posts of Aditi increase me; let Indra anoint splendor into my hands; let Savitar make me one attaining old age.

**XVIII.3.13** Him who died first of mortals, who went forth first to that world, Vivasvant's son, assembler of people, king Yama honor ye with oblation.

परा यात पितर आ च यातायं वो यज्ञो मधुना समक्तः ।
दत्तो अस्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं दधात ॥१४॥
कण्वः कक्षीवान्पुरुमीढो अगस्त्यः श्यावाश्वः सोभर्यर्चनानाः ।
विश्वामित्रोयं जमदग्निरत्रिरवन्तु नः कश्यपो वामदेवः ॥१५॥
विश्वामित्र जमदग्ने वसिष्ठ भरद्वाज गोतम वामदेव ।
शर्दिर्नो अत्रिरग्रभीन्नमोभिः सुसंशासः पितरो मृडता नः ॥१६॥
कस्ये मृजाना अति यन्ति रिप्रमायुर्दधानाः प्रतरं नवीयः ।
आप्यायमानाः प्रजया धनेनाध स्याम सुरभयो गृहेषु ॥१७॥
अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति मधुनाभ्यञ्जते ।
सिन्धोरुच्छ्वासे पतयन्तमुक्षणं हिरण्यपावाः पशुमासु गृह्णते ॥१८॥
यद्वो मुद्रं पितरः सोम्यं च तेनो सचध्वं स्वयशसो हि भूत ।
ते अर्वाणः कवय आ शृणोत सुविदत्रा विदथे हूयमानाः ॥१९॥

परा । यात । पितरः । आ । च । यात । अयम् । वः । यज्ञः । मधुना । समऽअक्तः । दत्तो इति । अस्मभ्यम् । द्रविणा । इह । भद्रम् । रयिम् । च । नः । सर्वऽवीरम् । दधात ॥१४॥
कण्वः । कक्षीवान् । पुरुऽमीढः । अगस्त्यः । श्यावऽअश्वः । सोभरी । अर्चनानाः ।
विश्वामित्रः । अयम् । जमत्ऽअग्निः । अत्रिः । अवन्तु । नः । कश्यपः । वामऽदेवः ॥ १५ ॥
विश्वामित्र । जमत्ऽअग्ने । वसिष्ठ । भरत्ऽवाज । गोतम । वामऽदेव ।
शर्दिः । नः । अत्रिः । अग्रभीत् । नमःऽभिः । सुऽसंशासः । पितरः । मृडत । नः ॥ १६ ॥
कस्ये । मृजानाः । अति । यन्ति । रिप्रम् । आयुः । दधानाः । प्रऽतरम् । नवीयः ।
आऽप्यायमानाः । प्रऽजया । धनेन । अध । स्याम । सुरभयः । गृहेषु ॥ १७ ॥
अञ्जते । वि । अञ्जते । सम् । अञ्जते । क्रतुम् । रिहन्ति । मधुना । अभि । अञ्जते ।
सिन्धोः । उतऽश्वासे । पतयन्तम् । उक्षणम् । हिरण्यऽपावाः । पशुम् । आसु । गृह्णते ॥१८॥
यत् । वः । मुद्रम् । पितरः । सोम्यम् । च । तेनो इति । सचध्वम् । स्वऽयशसः । हि । भूत । ते । अर्वाणः । कवयः । आ । शृणोत । सुऽविदत्राः । विदथे । हूयमानाः ॥१९॥

**XVIII.3.14** Go away, ye Fathers, and come; this sacrifice is all anointed with honey for you; both give to us here excellent property, and assign to us wealth having all heroes.

**XVIII.3.15** Let Kaṇva, Kakshīvant, Purumdha, Agastya, Śyāvācva, Sobharī, Archanānas, Viśvāmitra, Jamadagni here Atri, Kaśyapa, Vāmadeva, aid us.

**XVIII.3.16** O Viśvāmitra, Jamadagni, Vasiṣṭha, Bhāradvāja, Gotama, Vāmadva — Atri hath taken our śardis with obeisances; ye Fathers of good report, be gracious to us.

**XVIII.3.17** They overpass defilement, wiping (it) off in the metal bowl, assuming further on newer life-time, filling themselves up with progeny and riches; then may we be of good odor in the houses.

**XVIII.3.18** They anoint, they anoint out, they anoint together; they lick the rite, they smear with honey; the bull flying in the uphearing of the river, the victim do the gold-purifiers seize in them. [Rg.IX.86.43.Var.]

**XVIII.3.19** What of you is joyous, O Fathers, and delectable, there will be at hand, for ye are of own splendor; do ye, rapid poets, listen, beneficent, invoked at the council.

ये अत्रयो अङ्गिरसो नवग्वा इष्टावन्तो रातिषाचो दधानाः ।
दक्षिणावन्तः सुकृतो य उ स्थासद्यास्मिन्बर्हिषि मादयध्वम् ॥२०॥ (१४)
अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशशानाः ।
शुचीदयन्दीध्यत उक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ॥२१॥
सुकर्माणः सुरुचो देवयन्तो अयो न देवा जनिमा धमन्तः ।
शुचन्तो अग्निं वावृधन्त इन्द्रमुर्वीं गव्यां परिषदं नो अक्रन् ॥२२॥
आ यूथेव क्षुमति पश्वो अख्यद्देवानां जनिमान्त्युग्रः ।
मर्तासश्चिदुर्वशीरकृप्रन्वृधे चिदर्य उपरस्यायोः ॥२३॥
अकर्म ते स्वपसो अभूम ऋतमवस्रन्नुषसो विभातीः ।
विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥२४॥
इन्द्रो मा मरुत्वान्प्राच्या दिशः पातु बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥२५॥

ये । अत्रयः । अङ्गिरसः । नवऽग्वाः । इष्टऽवन्तः । रातिऽसाचः । दधानाः । दक्षिणाऽवन्तः ।
सुऽकृतः । ये । ऊं इति । स्थ । आऽसद्य । अस्मिन् । बर्हिषि । मादयध्वम् ॥ २० ॥
अध । यथा । नः । पितरः । परासः । प्रत्नासः । अग्ने । ऋतम् । आऽशशानाः ।
शुचि । इत् । अयन् । दीध्यतः । उक्थऽशसः । क्षाम । भिन्दन्तः । अरुणीः । अप । व्रन् ॥
सुऽकर्माणः । सुऽरुचः । देवऽयन्तः । अयः । न । देवाः । जनिम । धमन्तः ।
शुचन्तः । अग्निम् । ववृधन्तः । इन्द्रम् । उर्वीम् । गव्याम् । परिऽसदम् । नः । अक्रन् ॥
आ । यूथाऽइव । क्षुऽमति । पश्वः । अख्यत् । देवानाम् । जनिम । अन्ति । उग्रः ।
मर्तासः । चित् । उर्वशीः । अकृप्रन् । वृधे । चित् । अर्यः । उपरस्य । आयोः ॥२३॥
अकर्म । ते । सुऽअपसः । अभूम । ऋतम् । अवस्रन् । उषसः । विऽभातीः ।
विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवाः । बृहत् । वदेम । विदथे । सुऽवीराः ॥२४॥
इन्द्रः । मा । मरुत्वान् । प्राच्याः । दिशः । पातु । बाहुऽच्युता । पृथिवी । द्याम्ऽइव ।
उपरि । लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥

**XVIII.3.20** Ye who are Atris, Añgirases, Navagvas, having sacrificed, attached to giving, bestowers, and who are rich in sacrificial fees, well-doing--do ye revel, sitting on this barhis.

**XVIII.3.21** So then as our distant Fathers, the ancient ones, O Agni, sharpening the rite: they went to the bright, they shone, praising with song; splitting the ground, they uncovered the ruddy ones.

**XVIII.3.22** Of good actions, well-shining, pious, heavenly ones, forging the generations as (smiths forge) metal, brightening Agni, increasing Indra, they have made for us a wide conclave, rich in kine.

**XVIII.3.23** As herds at food, the formidable one hath looked over the cattle, the births of the gods, near by; mortals have lamented the urvaśis, unto the increase of the pious, of the next man. [Rg IV.2.18]

**XVIII.3.24** We have made (sacrifices) for thee; we have been very active; the illuminating dawns have shone upon (our) rite; all that is excellent which the gods favor; may we talk big at the council, having good heroes. [Rg.IV.2.19 and II.23.19]

**XVIII.3.25** Let Indra with the Maruts protect me from the eastern quarter; arm-moved (is) the earth, as it were to the sky above; to the world-makers, the road-makers, do we sacrifice, whoever of you are here, sharing in the oblation of the gods.

धाता मा निर्ऋत्या दक्षिणाया दिशः पातु बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥२६॥
अदितिर्मादित्यैः प्रतीच्या दिशः पातु बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥२७॥
सोमो मा विश्वैर्देवैरुदीच्या दिशः पातु बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥२८॥
धर्ता ह त्वा धरुणो धारयाता ऊर्ध्वं भानुं सविता द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥२९॥
प्राच्यां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥३०॥(१४)
दक्षिणायां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥३१॥

धाता । मा । निःऽऋत्याः । दक्षिणायाः । दिशः । पातु । बाहुऽच्युता । पृथिवी । द्याम्ऽइव । उपरि ।
लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ २६ ॥
अदितिः । मा । आदित्यैः । प्रतीच्याः । दिशः । पातु । बाहुऽच्युता । पृथिवी । द्याम्ऽइव । उपरि ।
लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ २७ ॥
सोमः । मा । विश्वैः । देवैः । उदीच्याः । दिशः । पातु । बाहुऽच्युता । पृथिवी । द्याम्ऽइव ।
उपरि । लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ २८ ॥
धर्ता । ह । त्वा । धरुणः । धारयातै । ऊर्ध्वम् । भानुम् । सविता । द्याम्ऽइव । उपरि ।
लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ २९ ॥
प्राच्याम् । त्वा । दिशि । पुरा । सम्ऽवृतः । स्वधायाम् । आ । दधामि । बाहुऽच्युता । पृथिवी ।
द्याम्ऽइव । उपरि । लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥
दक्षिणायाम् । त्वा । दिशि । पुरा । सम्ऽवृतः । स्वधायाम् । आ । दधामि । बाहुऽच्युता । पृथिवी ।
द्याम्ऽइव । उपरि । लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥

**XVIII.3.26** Let Dhātar protect me from perdition from the souhtern quarter; arm-moved etc. etc.

**XVIII.3.27** Let Aditi with the Ādityas protect me from the western quarter; arm-moved etc. etc.

**XVIII.3.28** Let Soma with all the gods protect me from the northern quarter; arm-moved etc. etc.

**XVIII.3.29** Dhartar the maintainer shall maintain thee aloft, as Savitar the light to the sky above; to the world-makers etc. etc.

**XVIII.3.30** In the eastern quarter, away from approach, do I set thee in svadhā; arm-moved etc. etc.

**XVIII.3.31** In the southern quarter, away etc. etc.

प्रतीच्यां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युतां पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥३२॥

उदीच्यां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युतां पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥३३॥

ध्रुवायां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युतां पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥३४॥

ऊर्ध्वायां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युतां पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥३५॥

धर्तासि धरुणोसि वंसगोसि ॥३६॥

उदपूरसि मधुपूरसि वातपूरसि ॥३७॥

प्रतीच्याम् । त्वा । दिशि । पुरा । सम्ऽवृतः । स्वधायाम् । आ । दधामि । बाहुऽच्युताम् । पृथिवी । द्याम्ऽइव । उपरि । लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥

उदीच्याम् । त्वा । दिशि । पुरा । सम्ऽवृतः । स्वधायाम् । आ । दधामि । बाहुऽच्युताम् । पृथिवी । द्याम्ऽइव । उपरि । लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ ३३ ॥

ध्रुवायाम् । त्वा । दिशि । पुरा । सम्ऽवृतः । स्वधायाम् । आ । दधामि । बाहुऽच्युताम् । पृथिवी । द्याम्ऽइव । उपरि । लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ ३४ ॥

ऊर्ध्वायाम । त्वा । दिशि । पुरा । सम्ऽवृतः । स्वधायाम् । आ । दधामि । बाहुऽच्युताम् । पृथिवी । द्याम्ऽइव । उपरि । लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ ३५ ॥

धर्ता । असि । धरुणः । असि । वंसगः । असि ॥ ३६ ॥

उदऽपूः । असि । मधुऽपूः । असि । वातऽपूः । असि ॥ ३७ ॥

**XVIII.3.32** In the western quarter, away etc. etc.

**XVIII.3.33** In the northern quarter, away etc. etc.

**XVIII.3.34** In the fixed quarter, away etc. etc.

**XVIII.3.35** In the upward quarter, away etc. etc.

**XVIII.3.36** Dhartar art thou; maintaining art thou; bull art thou.

**XVIII.3.37** Water-purifying art thou; honey-purifying art thou; wind-purifying art thou.

इतश्च मामुतश्चावतां यमे इव यतमाने यदैतम् ।
प्र वां भरन्मानुषा देवयन्तो आ सीदतां स्वमु लोकं विदाने ॥३८॥
स्वासस्थे भवतमिन्दवे नो युजे वां ब्रह्म पूर्व्यं नमोभिः ।
वि श्लोक एति पथ्येव सूरिः शृण्वन्तु विश्वे अमृतास एतत् ॥३९॥
त्रीणि पदानि रुपो अन्वरोहच्चतुष्पदीमन्वैतद्व्रतेन ।
अक्षरेण प्रति मिमीते अर्कमृतस्य नाभावभि सं पुनाति ॥४०॥ (१६)
देवेभ्यः कमवृणीत मृत्युं प्रजायै किममृतं नावृणीत ।
बृहस्पतिर्यज्ञमतनुत ऋषिः प्रियां यमस्तन्व१मा रिरेच ॥४१॥
त्वमग्न ईडितो जातवेदोवाड्ढव्यानि सुरभीणि कृत्वा ।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषि ॥४२॥
आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय ।
पुत्रेभ्यः पितरस्तस्य वस्वः प्र यच्छत त इहोर्जं दधात ॥४३॥

इतः । च । मा । अमुतः । च । अवताम् । यमे इवेति यमेऽइव । यतमाने इति । यत् । ऐतम् ।
प्र । वाम् । भरन् । मानुषाः । देवऽयन्तः । आ । सीदताम् । स्वम् । ऊं इति ।
लोकम् । विदाने इति ॥ ३८ ॥

स्वासस्थे इति सुऽआसस्थे । भवतम् । इन्दवे । नः । युजे । वाम् । ब्रह्म । पूर्व्यम् । नमःऽभिः ।
वि । श्लोकः । एति । पथ्याऽइव । सूरिः । शृण्वन्तु । विश्वे । अमृतासः । एतत् ॥ ३९ ॥

त्रीणि । पदानि । रुपः । अनु । अरोहत् । चतुःऽपदीम् । अनु । एतत् । व्रतेन ।
अक्षरेण । प्रति । मिमीते । अर्कम् । ऋतस्य । नाभौ । अभि । सम् । पुनाति ॥ ४० ॥

देवेभ्यः । कम् । अवृणीत । मृत्युम् । प्रऽजायै । किम् । अमृतम् । न । अवृणीत ।
बृहस्पतिः । यज्ञम् । अतनुत । ऋषिः । प्रियाम् । यमः । तन्वम् । आ । रिरेच ॥ ४१ ॥

त्वम् । अग्ने । ईडितः । जातऽवेदः । अवाट् । हव्यानि । सुरभीणि । कृत्वा ।
प्र । अदाः । पितृऽभ्यः । स्वधया । ते । अक्षन् । अद्धि । त्वम् । देव । प्रऽयता । हवींषि ॥४२॥

आसीनासः । अरुणीनाम् । उपऽस्थे । रयिम् । धत्त । दाशुषे । मर्त्याय ।
पुत्रेभ्यः । पितरः । तस्य । वस्वः । प्र । यच्छत । ते । इह । ऊर्जम् । दधात ॥ ४३ ॥

**XVIII.3.38** Both from here and from yonder let them aid me. As ye (du.) (neut.) went pressing on (root yat) like two twins, god-loving men bring you forward; set ye, (each) on thine own place, knowing (it).

**XVIII.3.39** Be ye comfortable for our soma. I yoke for you ancient worship with obeisance; the song goes forth like a patron on his road; let all the immortals hear that.

**XVIII.3.40** Three steps the form ascended, it went after the four-footed one with its course; it matches the song with the syllable; in the navel of right it purifies.

**XVIII.3.41** For the gods he chose death; for his progeny did he not choose immortality ? Bṛhaspati (as) seer extended the sacrifice; Yama left his dear self.

**XVIII.3.42** Thou, O agni, Jātavedas, being praised, hast carried the offering, having made them fragrant; thou hast given to the Fathers; they have eaten after their wont; eat thou, O god, the presented oblations,

**XVIII.3.43** Sitting in the lap of the ruddy ones, assign ye wealth to your mortal worshiper, of that good, O Fathers, present ye to your sons; do ye bestow refreshment here.

अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः ।
अत्तो हवींषि प्रयतानि बर्हिषि रयिं च नः सर्ववीरं दधात ॥४४॥
उपहूता नः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥४५॥
ये नः पितुः पितरो ये पितामहा अनूजहिरे सोमपीथं वसिष्ठाः ।
तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ॥४६॥
ये तातृषुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः ।
आग्ने याहि सहस्रं देववन्दैः सत्यैः कविभिर्ऋषिभिर्घर्मसद्भिः ॥४७॥
ये सत्यासो हविरदो हविष्पा इन्द्रेण देवैः सरथं तुरेण ।
आग्ने याहि सुविदत्रेभिरर्वाङ् परैः पूर्वैर्ऋषिभिर्घर्मसद्भिः ॥४८॥
उप सर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवाम् ।
ऊर्णम्रदाः पृथिवी दक्षिणावत एषा त्वा पातु प्रपथे पुरस्तात् ॥४९॥

अग्निऽस्वात्ताः । पितरः । आ । इह । गच्छत । सदःसदः । सदत । सुऽप्रनीतयः ।
अत्तो इति । हवींषि । प्रऽयतानि । बर्हिषि । रयिम् । च । नः । सर्वऽवीरम् । दधात ॥४४॥
उपऽहूताः । नः । पितरः । सोम्यासः । बर्हिष्येषु । निऽधिषु । प्रियेषु । ते । आ ।
गमन्तु । ते । इह । श्रुवन्तु । अधि । ब्रुवन्तु । ते । अवन्तु । अस्मान् ॥ ४५ ॥
ये । नः । पितुः । पितरः । ये । पितामहाः । अनुऽजहिरे । सोमऽपीथम् । वसिष्ठाः ।
तेभिः । यमः । सम्ऽरराणः । हवींषि । उशन् । उशत्ऽभिः । प्रतिऽकामम् । अत्तु ॥४६॥
ये । ततृषुः । देवऽत्रा । जेहमानाः । होत्राऽविदः । स्तोमऽतष्टासः । अर्कैः । आ । अग्ने ।
याहि । सहस्रम् । देवऽवन्दैः । सत्यैः । कविऽभिः । ऋषिऽभिः । घर्मसत्ऽभिः ॥४७॥
ये । सत्यासः । हविःऽअदः । हविःऽपाः । इन्द्रेण । देवैः । सऽरथम् । तुरेण । आ ।
अग्ने । याहि । सुऽविदत्रेभिः । अर्वाङ् । परैः । पूर्वैः । ऋषिऽभिः । घर्मसत्ऽभिः ॥४८॥
उप । सर्प । मातरम् । भूमिम् । एताम् । उरुऽव्यचसम् । पृथिवीम् । सुऽशेवाम् ।
ऊर्णऽम्रदाः । पृथिवी । दक्षिणाऽवते । एषा । त्वा । पातु । प्रऽपथे । पुरस्तात् ॥४९॥

**XVIII.3.44** Ye fire-sweetened Fathers, come hither; sit on each seat, well-conducting ones; eat on the barhis the presented oblations, and assign to us wealth having all heroes. (Rg.X.15.11)

**XVIII.3.45** Called unto (are) our delectable Fathers, to dear deposits on the barhis; let them come; let them listen here; let them bless, let them aid us. (Rg.X.15.5)

**XVIII.3.46** They who, our father's fathers, who (his) grandfathers, followed after the soma-drinking, best ones – with them let Yama, sharing his gift of oblations, he eager with them eager, eat at pleasure. (Rg.X.15.8)

**XVIII.3.47** They who thirsted panting among the gods, knowers of offering, praise-fashioned, with songs – come, O Agni, with the thousand god-revering true poets, seers sitting at the ghrama.

**XVIII.3.48** The true, oblation-eating, oblation-drinking (ones) that (go) in alliance with the gods, with strong Indra – come hither ward, O Agni, with the beneficent, exalted, ancient seers, sitting at the gharma. (cf. Rg.X.15.9)

**XVIII.3.49** Approach thou this mother earth, the wide-expanded earth, the very propitious; the earth (is) soft as wool to him who has sacrificial gifts; let her protect thee on the forward road in front. (cf. Rg.X.15.10)

उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः सूपायनास्मै भव सूपसर्पणा ।
माता पुत्रं यथा सिचाभ्ये॑नं भूम ऊर्णुहि ॥५०॥ (१७)
उच्छ्वञ्चमाना पृथिवी सु तिष्ठतु सहस्रं मित उप हि श्रयन्ताम् ।
ते गृहासो घृतश्चुतः स्योना विश्वाहास्मै शरणाः सन्त्वत्र ॥५१॥
उत्ते स्तभ्नामि पृथिवीं त्वत्परीमं लोगं निदधन्मो अहं रिषम् ।
एतां स्थूणां पितरो धारयन्ति ते तत्र यमः सादना ते कृणोतु ॥५२॥
इममग्ने चमसं मा वि जिह्वरः प्रियो देवानामुत सोम्यानाम् ।
अयं यश्चमसो देवपानस्तस्मिन्देवा अमृता मादयन्ताम् ॥५३॥
अथर्वा पूर्णं चमसं यमिन्द्रायाबिभर्वाजिनीवते ।
तस्मिन्कृणोति सुकृतस्य भक्षं तस्मिन्निन्दुः पवते विश्वदानीम् ॥५४॥
यत्ते कृष्णः शकुन आतुतोद पिपीलः सर्प उत वा श्वापदः ।
अग्निष्टद्विश्वादगदं कृणोतु सोमश्च यो ब्राह्मणाँ आविवेश ॥५५॥

उत् । श्वञ्चस्व । पृथिवि । मा । नि । बाधथाः । सुऽउपायना । अस्मै । भव । सुऽउपसर्पणा ।
माता । पुत्रम् । यथा । सिचा । अभि । एनम् । भूमे । ऊर्णुहि ॥ ५० ॥
उत्ऽश्वञ्चमाना । पृथिवी । सु । तिष्ठतु । सहस्रम । मितः । उप । हि । श्रयन्ताम् ।
ते । गृहासः । घृतऽश्चुतः । स्योनाः । विश्वाहा । अस्मै । शरणाः । सन्तु । अत्र ॥५१॥
उत् । ते । स्तभ्नामि । पृथिवीम् । त्वत् । परि । इमम् । लोगम् । निऽदधत् । मो इति । अहम् ।
रिषम् । एताम् । स्थूणाम् । पितरः । धारयन्ति । ते । तत्र । यमः । सदना । ते । कृणोतु ॥
इमम् । अग्ने । चमसम् । मा । वि । जिह्वरः । प्रियः । देवानाम् । उत । सोम्यानाम् ।
अयम् । यः । चमसः । देवऽपानः । तस्मिन् । देवाः । अमृताः । मादयन्ताम् ॥ ५३ ॥
अथर्वा । पूर्णम् । चमसम् । यम् । इन्द्राय । अबिभः । वाजिनीऽवते ।
तस्मिन् । कृणोति । सुऽकृतस्य । भक्षम् । तस्मिन् । इन्दुः । पवते । विश्वऽदानीम् ॥५४॥
यत् । ते । कृष्णः । शकुनः । आऽतुतोद । पिपीलः । सर्पः । उत । वा । श्वापदः । अग्निः ।
तत् । विश्वऽअत् । अगदम् । कृणोतु । सोमः । च । यः । ब्राह्मणान् । आऽविवेश ॥५५॥

## Bhūmi : Earth

**XVIII.3.50** Swell thou up, O earth; do not press down; be to him easy of access, easy of approach; as a mother her son with her skirt, do thou, O earth, cover him. (cf.Rg.X.18.11)

**XVIII.3.51** Let the earth kindly remain swelling up, for let a thousand props support it; let these houses, dripping with ghee, pleasant, be forever a refuge for him there. (Ṛg. X.18.12.Var.)

**XVIII.3.52** I brace up the earth from about thee; setting down this clod, let me take no harm; this pillar do the Fathers maintain for thee; let Yama there make seats for thee. (Rg.X.16.8)

**XVIII.3.53** This bowl, O Agni, do not warp; (it is) dear to the gods and the delectable (Fathers); this bowl here for the gods to drink from – in it let the immortal gods revel. (cf.Ṛg.X.16.8)

## Indra

**XVIII.3.54** The bowl that Atharvan bore full to Indra the vigorous, in that he makes a draught of what is well done; in that, soma ever purifies itself.

**XVIII.3.55** What of thee the black bird thrust at, the ant, the serpent, or also the beast of prey, let the all-eating (viśva-ad) Agni make that free from disease, and the soma that hath entered the Brahmans.

पर्यस्वतीरोषधयः पर्यस्वन्मामकं पयः ।
अपां पयसो यत्पयस्तेन मा सह शुम्भतु ॥५६॥

इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा सं स्पृशन्ताम् ।
अनश्रवो अनमीवाः सुरत्ना आ रोहन्तु जनयो योनिमग्रे ॥५७॥

सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन् ।
हित्वावद्यं पुनरस्तमेहि सं गच्छतां तन्वा सुवर्चाः ॥५८॥

ये नः पितुः पितरो ये पितामहा य आविविशुरुर्वन्तरिक्षम् ।
तेभ्यः स्वराडसुनीतिर्नो अद्य यथावशं तन्वः कल्पयाति ॥५९॥

शं ते नीहारो भवतु शं ते प्रुष्वाव शीयताम् ।
शीतिके शीतिकावति ह्लादिके ह्लादिकावति ।
मण्डूक्यप्सु शं भुव इमं स्वग्निं शमय ॥६०॥ (१८)

विवस्वान्नो अभयं कृणोतु यः सुत्रामा जीरदानुः सुदानुः ।
इहेमे वीरा बहवो भवन्तु गोमदश्ववन्मय्यस्तु पुष्टम् ॥६१॥

पयस्वतीः । ओषधयः । पयस्वत् । मामकम् । पयः ।
अपाम् । पयसः । यत् । पयः । तेन । मा । सह । शुम्भतु ॥ ५६ ॥

इमाः । नारीः । अविधवाः । सुऽपत्नीः । आऽअञ्जनेन । सर्पिषा । सम् । स्पृशन्ताम् ।
अनश्रवः । अनमीवाः । सुऽरत्नाः । आ । रोहन्तु । जनयः । योनिम् । अग्रे ॥ ५७ ॥

सम् । गच्छस्व । पितृऽभिः । सम् । यमेन । इष्टापूर्तेन । परमे । विऽओमन् ।
हित्वा । अवद्यम् । पुनः । अस्तम् । आ । इहि । सम् । गच्छताम् । तन्वा । सुऽवर्चाः ॥

ये । नः । पितुः । पितरः । ये । पितामहाः । ये । आऽविविशुः । उरु । अन्तरिक्षम् ।
तेभ्यः । स्वऽराट् । असुऽनीतिः । नः । अद्य । यथाऽवशम् । तन्वः । कल्पयाति ॥ ५९ ॥

शम् । ते । नीहारः । भवतु । शम् । ते । प्रुष्वा । अव । शीयताम् । शीतिके । शीतिकाऽवति ।
ह्लादिके । ह्लादिकाऽवति । मण्डूकी । अप्ऽसु । शम् । भुवः । इमम् । सु । अग्निम् । शमय ॥६०॥

विवस्वान् । नः । अभयम् । कृणोतु । यः । सुऽत्रामा । जीरऽदानुः । सुऽदानुः ।
इह । इमे । वीराः । बहवः । भवन्तु । गोऽमत् । अश्वऽवत् । मयि । अस्तु । पुष्टम् ॥ ६१ ॥

### Apaḥ

**XVIII.3.56** Rich in milk are the herbs; rich in milk is my milk; what is the milk of the milk of the waters, therewith let one beautify me.

### Yama

**XVIII.3.57** Let these women, not widows, well-spoused, thouch themselves with ointment, with butter; tearless, without disease, with good treasures, let the wives ascend first to the place of union.

**XVIII.3.58** Unite thyself with the Fathers, with Yama, with thy sacred and charitable works in the highest firmament; abandoning what is reproachful, come again home; – let them unite himself with a body, very splendid. (Rg.X.14.8.Var.)

**XVIII.3.59** They that are our father's fathers, that are (his) grandfathers, that entered the wide atmosphere – for them may the autocratic second life today shape our bodies as he will.

**XVIII.3.60** Let the mist be weal for thee; let the frost fall down (as) weal for thee; O cool one, possessing cool ones; mayest thou be with weal a she-frog in the waters; kindly pacify thou this fire.

**XVIII.3.61** Let Vivasvant make for us freedom from fear, he who is well-preserving, quick-giving, well-giving; let these heroes be many here; let there be in me prosperity rich in kine, rich in horses.

विवस्वान्नो अमृतत्वे दधातु परैतु मृत्युरमृतं न ऐतु ।
इमान्रक्षतु पुरुषाना जरिम्णो मो ष्वे षामसवो यमं गुः ॥६२॥
यो दध्रे अन्तरिक्षे न मह्ना पितृणां कविः प्रमतिर्मतीनाम् ।
तमर्चत विश्वमित्रा हविर्भिः स नो यमः प्रतरं जीवसे धात् ॥६३॥
आ रोहत दिवमुत्तमामृषयो मा बिभीतन ।
सोमपाः सोमपायिन इदं वः क्रियते हविरगन्म ज्योतिरुत्तमम् ॥६४॥
प्र केतुना बृहता भात्यग्निरा रोदसी वृषभो रोरवीति ।
दिवश्चिदन्तादुपमामुदानडपामुपस्थे महिषो ववर्ध ॥६५॥
नाके सुपर्णमुप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥६६॥
इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥६७॥

विवस्वान् । नः । अमृतऽत्वे । दधातु । परा । एतु । मृत्युः । अमृतम् । नः । आ । एतु ।
इमान् । रक्षतु । पुरुषान् । आ । जरिम्णः । मो इति । सु । एषाम् । असवः । यमम् । गुः ॥ ६२ ॥
यः । दध्रे । अन्तरिक्षे । न । मह्ना । पितृणाम् । कविः । प्रऽमतिः । मतीनाम् ।
तम् । अर्चत । विश्वऽमित्राः । हविःऽभिः । सः । नः । यमः । प्रऽतरम् । जीवसे । धात् ॥ ६३ ॥
आ । रोहत । दिवम् । उत्ऽतमाम् । ऋषयः । मा । बिभीतन । सोमऽपाः । सोम-
ऽपायिनः । इदम् । वः । क्रियते । हविः । अगन्म । ज्योतिः । उत्ऽतमम् ॥ ६४ ॥
प्र । केतुना । बृहता । भाति । अग्निः । आ । रोदसी इति । वृषभः । रोरवीति ।
दिवः । चित् । अन्तात् । उपऽमाम् । उत् । आनट् । अपाम् । उपऽस्थे । महिषः । ववर्ध ॥
नाके । सुऽपर्णम् । उप । यत् । पतन्तम् । हृदा । वेनन्तः । अभिऽअचक्षत । त्वा ।
हिरण्यऽपक्षम् । वरुणस्य । दूतम् । यमस्य । योनौ । शकुनम् । भुरण्युम् ॥ ६६ ॥
इन्द्र । क्रतुम । नः । आ । भर । पिता । पुत्रेभ्यः । यथा ।
शिक्ष । नः । अस्मिन् । पुरुऽहूत । यामनि । जीवाः । ज्योतिः । अशीमहि ॥ ६७ ॥

**XVIII.3.62** Let Vivasvant set us in immortality; let what is immortal come to us; let (him) defend these men until old age; let not their life-breaths go to Yama.

**XVIII.3.63** He who maintains himself by his might, like (birds ?) in the atmosphere, poet of the Fathers, favorer of prayers – him praise ye, all befriended, with oblations; may that Yama give us to live further on.

**XVIII.3.64** Ascend ye to the highest heaven; O seers, be not afraid; ye soma-drinkers, soma-drenchers, this oblation is made to you; we have gone to the highest light.

**XVIII.3.65** Agni shines forth with great show; the bull roars loudly unto the two firmaments; (even) from the end of heaven he hath attained unto me in the lap of the waters the buffalo increased.

**XVIII.3.66** As, longing with the heart, they looked upon thee, flying up (as) an eagle in the firmament, golden-winged messenger of Varuṇa, busy bird in the lair of Yama. (Rg.X.123.6; also Sv I.320, II.1196)

**XVIII.3.67** O Indra, bring us ability, as a father to his sons; help us in this course, O much-invoked one; may we, living, attain to light. (Ṛg.VII.32.26; also Sv.I.259;II.806)

अपूपापिहितान्कुम्भान्यांस्ते देवा अधारयन् ।
ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुतः ॥६८॥
यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः ।
तास्ते सन्तु विभ्वीः प्रभ्वीस्तास्ते यमो राजानु मन्यताम् ॥६९॥
पुनर्देहि वनस्पते य एष निहितस्त्वयि ।
यथा यमस्य सादन आसातै विदथा वदन् ॥७०॥
आ रभस्व जातवेदस्तेजस्वद्धरो अस्तु ते ।
शरीरमस्य सं दहाथैनं धेहि सुकृतामु लोके ॥७१॥
ये ते पूर्वे परागता अपरे पितरश्च ये ।
तेभ्यो घृतस्य कुल्यैतु शतधारा व्युन्दती ॥७२॥
एतदा रोह वय उन्मृजानः स्वा इह बृहदु दीदयन्ते ।
अभि प्रेहि मध्यतो माप हास्थाः पितॄणां लोकं प्रथमो यो अत्र ॥७३॥ (१९)

अपूपऽअपिहितान् । कुम्भान् । यान् । ते । देवाः । अधारयन् ।
ते । ते । सन्तु । स्वधाऽवन्तः । मधुऽमन्तः । घृतऽश्चुतः ॥ ६८ ॥
याः । ते । धानाः । अनुऽकिरामि । तिलऽमिश्राः । स्वधाऽवतीः ।
ताः । ते । सन्तु । विऽभ्वीः । प्रऽभ्वीः । ताः । ते । यमः । राजा । अनु । मन्यताम् ॥६९॥
पुनः । देहि । वनस्पते । यः । एषः । निऽहितः । त्वयि ।
यथा । यमस्य । सदने । आसातै । विदथा । वदन् ॥ ७० ॥
आ । रभस्व । जातऽवेदः । तेजस्वत् । हरः । अस्तु । ते ।
शरीरम् । अस्य । सम् । दह । अथ । एनम् । धेहि । सुकृताम् । ऊं इति । लोके ॥७१॥
ये । ते । पूर्वे । पराऽगताः । अपरे । पितरः । च । ये ।
तेभ्यः । घृतस्य । कुल्या । एतु । शतऽधारा । विऽउन्दती ॥ ७२ ॥
एतत् । आ । रोह । वयः । उत्ऽमृजानः । स्वाः । इह । बृहत् । ऊं इति । दीदयन्ते ।
अभि । प्र । इहि । मध्यतः । मा । अप । हास्थाः । पितॄणाम् । लोकम् । प्रथमः । यः । अत्र ॥

**XVIII.3.68** What vessels covered with cakes the gods maintained for thee, be they for thee rich in svadhā, rich in honey, dripping with ghee.

**XVIII.3.69** What grains I scatter along for thee, mixed with sesame, rich in svadhā, be they for thee abundant, prevailing; them let king Yama approve for thee.

**XVIII.3.70** Give back, O forest tree, him who is deposited here with thee, that in Yama's seat he may sit speaking counsels.

**XVIII.3.71** Take hold, O Jātavedas; let thy seizure be with sharpness; his body do thou consume; then set him in the world of the well-doing.

**XVIII.3.72** What Fathers of thine went away earlier and what later, for them let there go a brook of ghee, hundred-streamed, overflowing.

**XVIII.3.73** Ascend thou this, gaining vigor; thine own (people) shine here greatly; go forth, unto (them) – be not left behind midway – unto the world of the Fathers that is first there.

( ४ ) चतुर्थं सूक्तम्

(१-८९) एकोननवत्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । (१-८०) प्रथमाद्यशीत्यृचां यमो मन्त्रोक्ताश्च, (८१-८७) एकाशीतितमादिसप्तानां पितरः, (८८) अष्टाशीतितमाया अग्निः, (८९) एकोननवतितमायाश्च चन्द्रमा देवताः । (१, ४, ७, १४, ३६, ६०) प्रथमाचतुर्थीसप्तमीचतुर्दशीषट्त्रिंशीषष्टीनां भुरिक्त्रिष्टुप्, (२, ५, ११, २९, ५०-५१, ५८) द्वितीयापञ्चम्येकादश्येकोनत्रिंशीपञ्चाश्येकपञ्चाश्यष्टपञ्चाशीनां जगती, (३) तृतीयायाः पञ्चपदा भुरिगतिजगती, (६) षष्ठ्याः पञ्चपदा शक्वरी, (८) अष्टम्याः पञ्चपदातिशक्वरी, (९) नवम्याः पञ्चपदा भुरिक्शक्वरी, (१०, १५, २८, ३०, ३४-३५, ३७, ४०, ४४-४८, ५२, ५४, ६४-६५, ६९-७०) दशमीपञ्चदश्यष्टाविंशीत्रिंशीचतुस्त्रिंशीपञ्चत्रिंशीसप्तत्रिंशीचत्वारिंशीनां चतुश्चत्वारिंश्यादिपञ्चानां द्विपञ्चाशीचतुष्पञ्चाशीचतुःषष्टीपञ्चषष्ट्येकोनसप्ततितमासप्ततितमानाञ्च त्रिष्टुप्, (१२) द्वादश्या महाबृहती, (१३) त्रयोदश्यास्त्र्यवसाना पञ्चपदा शक्वरी, (१६-२४) षोडश्यादिनवानां त्रिपदा भुरिङ्महाबृहती, (२५, ३१-३२, ३८, ४१-४२, ५५, ५७, ५९, ६१) पञ्चविंश्येकत्रिंशीद्वात्रिंश्यष्टात्रिंश्येकचत्वारिंशीद्विचत्वारिंशीपञ्चपञ्चाशीसप्तपञ्चाश्येकोनषष्ट्येकषष्टीनामनुष्टुप्, (२६, ४३) षड्विंशीत्रिचत्वारिंश्योर्विराडुपरिष्टाद्बृहती, (२७) सप्तविंश्या याजुषी गायत्री, (३३) त्रयस्त्रिंश्या उपरिष्टाद्बृहती, (३९) एकोनचत्वारिंश्याः पुरोविराडास्तारपङ्क्तिः, (४९) एकोनपञ्चाश्या अनुष्टुब्गर्भा त्रिष्टुप्, (५३) त्रिपञ्चाश्याः पुरोविराट् सतःपङ्क्तिः, (५६) षट्पञ्चाश्याः ककुम्मत्यनुष्टुप्, (६२) द्विषष्ट्या भुरिगास्तारपङ्क्तिः, (६३) त्रिषष्ट्याः स्वराडास्तारपङ्क्तिः, (६६) षट्षष्ट्यास्त्रिपदा स्वराड्गायत्री, (६७) सप्तषष्ट्या द्विपदार्च्यनुष्टुप्, (६८, ७१) अष्टषष्ट्येकसप्ततितमयोरासुर्यनुष्टुप्, (७२-७४, ७९) द्विसप्ततितमादितृचस्यैकोनाशीतितमायाश्चासुरी पङ्क्तिः, (७५) पञ्चसप्ततितमाया आसुरी गायत्री, (७६) षट्सप्ततितमाया आसुर्युष्णिक्, (७७) सप्तसप्ततितमाया दैवी जगती, (७८) अष्टसप्ततितमाया आसुरी त्रिष्टुप्, (८०) अशीतितमाया आसुरी जगती, (८१) एकाशीतितमायाः प्राजापत्यानुष्टुप्, (८२) द्व्यशीतितमायाः साम्नी बृहती, (८३-८४) त्र्यशीतितमाचतुरशीतितमयोः साम्नी त्रिष्टुप्, (८५) पञ्चाशीतितमाया आसुरी बृहती, (८६) षडशीतितमायाश्चतुष्पदा ककुम्मत्युष्णिक् [(६७-६८, ७१-८६) सप्तषष्ट्यष्टषष्ट्यावेकसप्ततितमादिषोडश चैकावसानाः], (८७) सप्ताशीतितमायाश्चतुष्पदा शङ्कुमत्युष्णिक्, (८८) अष्टाशीतितमायास्त्र्यवसाना पथ्यापङ्क्तिः, (८९) एकोननवतितमायाश्च पञ्चपदा पथ्यापङ्क्तिश्छन्दांसि ॥

आ रोहत जनित्रीं जातवेदसः पितृयाणैः सं व आ रोहयामि ।
अवाड्ढव्येषितो हव्यवाह ईजानं युक्ताः सुकृतां धत्त लोके ॥१॥
देवा यज्ञमृतवः कल्पयन्ति हविः पुरोडाशं स्रुचो यज्ञायुधानि ।
तेभिर्याहि पथिभिर्देवयानैर्यैरीजानाः स्वर्गं यन्ति लोकम् ॥२॥

आ । रोहत । जनित्रीम् । जातऽवेदसः । पितृऽयानैः । सम् । वः । आ । रोहयामि ।
अवाट् । हव्या । इषितः । हव्यऽवाहः । ईजानम् । युक्ताः । सुऽकृताम् । धत्त । लोके ॥१॥
देवाः । यज्ञम् । ऋतवः । कल्पयन्ति । हविः । पुरोडाशम् । स्रुचः । यज्ञऽआयुधानि ।
तेभिः । याहि । पथिऽभिः । देवऽयानैः । यैः । ईजानाः । स्वःऽगम् । यन्ति । लोकम् ॥

## Yama

**XVIII.4.1** Ascend to (your) generatrix, ye Jātavedases; by (roads) that the Fathers travel I make you ascend together; the offering-carrier, sent out, hath carried the offering; united set ye him who hath sacrificed in the world of the well-doing.

**XVIII.4.2** The gods, the seasons, arrange the sacrifice, the oblation, the sacrificial cake, the ladles, the implements of sacrifice; with them go thou by roads that the gods travel, by which they that have sacrificed go to the heavenly world.

**ऋतस्य पन्थामनु पश्य साध्वङ्गिरसः सुकृतो येन यन्ति ।**
**तेभिर्याहि पथिभिः स्वर्गं यत्रादित्या मधु भक्षयन्ति तृतीये नाके अधि वि श्रयस्व ॥३॥**

**त्रयः सुपर्णा उपरस्य मायू नाकस्य पृष्ठे अधि विष्टपि श्रिताः ।**
**स्वर्गा लोका अमृतेन विष्ठा इषमूर्जं यजमानाय दुह्राम् ॥४॥**

**जुहूर्दाधार द्यामुपभृदन्तरिक्षं ध्रुवा दाधार पृथिवीं प्रतिष्ठाम् ।**
**प्रतीमां लोका घृतपृष्ठाः स्वर्गाः कामंकामं यजमानाय दुह्राम् ॥५॥**

**ध्रुव आ रोह पृथिवीं विश्वभोजसमन्तरिक्षमुपभृदा क्रमस्व ।**
**जुहु द्यां गच्छ यजमानेन साकं स्रुवेण वत्सेन दिशः प्रपीनाः सर्वा धुक्ष्वाहृणीयमानः ॥६॥**

**तीर्थैस्तरन्ति प्रवतो महीरिति यज्ञकृतः सुकृतो येन यन्ति ।**
**अत्रादधुर्यजमानाय लोकं दिशो भूतानि यदकल्पयन्त ॥७॥**

**अङ्गिरसामयनं पूर्वो अग्निरादित्यानामयनं गार्हपत्यो दक्षिणानामयनं दक्षिणाग्निः ।**
**महिमानमग्नेर्विहितस्य ब्रह्मणा समङ्गः सर्व उप याहि शग्मः ॥८॥**

ऋतस्य । पन्थाम् । अनु । पश्य । साधु । अङ्गिरसः । सुऽकृतः । येन । यन्ति । तेभिः । याहि । पथिऽभिः । स्वःऽगम् । यत्र । आदित्याः । मधु । भक्षयन्ति । तृतीये । नाके । अधि । वि । श्रयस्व ॥ ३ ॥

त्रयः । सुऽपर्णाः । उपरस्य । मायू इति । नाकस्य । पृष्ठे । अधि । विष्टपि । श्रिताः । स्वःऽगाः । लोकाः । अमृतेन । विऽस्थाः । इषम् । ऊर्जम् । यजमानाय । दुह्राम् ॥ ४ ॥

जुहूः । दाधार । द्याम् । उपऽभृत् । अन्तरिक्षम् । ध्रुवा । दाधार । पृथिवीम् । प्रतिऽस्थाम् । प्रति । इमाम् । लोकाः । घृतऽपृष्ठाः । स्वःऽगाः । कामम्ऽकामम् । यजमानाय । दुह्राम् ॥५॥

ध्रुवे । आ । रोह । पृथिवीम् । विश्वऽभोजसम् । अन्तरिक्षम् । उपऽभृत् । आ । क्रमस्व । जुहु । द्याम् । गच्छ । यजमानेन । साकम् । स्रुवेण । वत्सेन । दिशः । प्रऽपीनाः । सर्वाः । धुक्ष्व । अहृणीयमानः ॥ ६ ॥

तीर्थैः । तरन्ति । प्रऽवतः । महीः । इति । यज्ञऽकृतः । सुऽकृतः । येन । यन्ति । अत्र । अदधुः । यजमानाय । लोकम् । दिशः । भूतानि । यत् । अकल्पयन्त ॥ ७ ॥

अङ्गिरसाम् । अयनम् । पूर्वः । अग्निः । आदित्यानाम् । अयनम् । गार्हऽपत्यः । दक्षिणानाम् । अयनम् । दक्षिणऽअग्निः । महिमानम् । अग्नेः । विऽहितस्य । ब्रह्मणा । सम्ऽअङ्गः । सर्वः । उप । याहि । शग्मः ॥ ८ ॥

**XVIII.4.3** Look thou happily along the road of righteousness, by which go the Añgirases, well-doers; by those roads go thou to heaven, where the Ādityas feed on honey; spread thou out upon the third firmament.

**XVIII.4.4** Three eagles, upon the back of the firmament, at the summit are set; let the heavenly worlds, filled with amṛta yield food, refreshment to the sacrificer.

**XVIII.4.5** The sacrificial spoon sustains the sky, the offering spoon the atmosphere; the ladle sustains the earth, the support; unto me let the worlds ghee-backed, heavenly, yield every desire for the sacrificer.

**XVIII.4.6** O ladle, ascend the all-nourishing earth; stride, O offering spoon, unto the atmosphere; O sacrificial spoon, go to the sky in company with the sacrificer; with the little spoon (as) calf, milk thou all the teeming, unirritated quarters.

**XVIII.4.7** By fords they cross the advances called the great ones, by what (road) the sacrifice-makers, the well-doers, go; there did they set a world for the sacrificer; when they arranged the quarters, the creatures.

**XVIII.4.8** The track of the Añgirases is the eastern fire; the Ādityas track is the householder's fire; the track of the sacrificial gifts is the southern fire; do thou, with thy limbs, whole powerful, go unto the greatness of Agni (as)disposed by brahman.

पूर्वो अग्निष्ट्वा तपतु शं पुरस्ताच्छं पश्चात्तपतु गार्हपत्यः ।
दक्षिणाग्निष्टे तपतु शर्म वर्मोत्तरतो मध्यतो अन्तरिक्षाद्दिशोदिशो अग्ने परि पाहि घोरात् ॥९॥

यूयमग्ने शंतमाभिस्तनूभिरीजानमभि लोकं स्वर्गम् ।
अश्वा भूत्वा पृष्टिवाहो वहाथ यत्र देवैः सधमादं मदन्ति ॥१०॥(२०)

शमग्ने पश्चात्तप शं पुरस्ताच्छमुत्तराच्छमधरात्तपैनम् ।
एकस्त्रेधा विहितो जातवेदः सम्यगेनं धेहि सुकृतामु लोके ॥११॥

शमग्नयः समिद्धा आ रभन्तां प्राजापत्यं मेध्यं जातवेदसः ।
शृतं कृण्वन्त इह माव चिक्षिपन् ॥१२॥

यज्ञ एति विततः कल्पमान ईजानमभि लोकं स्वर्गम् ।
तमग्नयः सर्वहुतं जुषन्तां प्राजापत्यं मेध्यं जातवेदसः ।
शृतं कृण्वन्त इह माव चिक्षिपन् ॥१३॥

ईजानश्चितमारुक्षदग्निं नाकस्य पृष्ठाद्दिवमुत्पतिष्यन् ।
तस्मै प्र भाति नभसो ज्योतिषीमान्त्स्वर्गः पन्थाः सुकृते देवयानः ॥१४॥

पूर्वः । अग्निः । त्वा । तपतु । शम् । पुरस्तात् । शम् । पश्चात् । तपतु । गार्हऽपत्यः ।
दक्षिणऽअग्निः । ते । तपतु । शर्म । वर्म । उत्तरतः । मध्यतः । अन्तरिक्षात् । दिशःऽदिशः ।
अग्ने । परि । पाहि । घोरात् ॥ ९ ॥

यूयम् । अग्ने । शम्ऽतमाभिः । तनूभिः । ईजानम् । अभि । लोकम् । स्वःऽगम् ।
अश्वाः । भूत्वा । पृष्टिऽवाहः । वहाथ । यत्र । देवैः । सधऽमादम् । मदन्ति ॥ १० ॥

शम् । अग्ने । पश्चात् । तप । शम् । पुरस्तात् । शम् । उत्तरात् । शम् । अधरात् । तप । एनम् ।
एकः । त्रेधा । विऽहितः । जातऽवेदः । सम्यक् । एनम् । धेहि । सुऽकृताम् । ऊं इति । लोके ॥ ११ ॥

शम् । अग्नयः । सम्ऽइद्धाः । आ । रभन्ताम् । प्राजाऽपत्यम् । मेध्यम् । जातऽवेदसः ।
शृतम् । कृण्वन्तः । इह । मा । अव । चिक्षिपन् ॥ १२ ॥

यज्ञः । एति । विऽततः । कल्पमानः । ईजानम् । अभि । लोकम् । स्वःऽगम ।
तम् । अग्नयः । सर्वऽहुतम् । जुषन्ताम् । प्राजाऽपत्यम् । मेध्यम् । जातऽवेदसः । शृतम् ।
कृण्वन्तः । इह । मा । अव । चिक्षिपन् ॥ १३ ॥

ईजानः । चितम् । आ । अरुक्षत् । अग्निम् । नाकस्य । पृष्ठात् । दिवम् । उत्ऽपतिष्यन् । तस्मै ।
प्र । भाति । नभसः । ज्योतिषीऽमान् । स्वःऽगः । पन्थाः । सुऽकृते । देवऽयानः ॥१४॥

**XVIII.4.9** Let the eastern fire burn thee happily in front; let the householder's fire burn happily behind; let the southern fire burn refuge, defense for thee; from the north, from the midst, from the atmosphere, from each quarter, O Agni, protect him round about from what is terrible.

**XVIII.4.10** Ye, O Agni, having become back-carrying horses, shall with most healthful forms carry him that has sacrificed unto the heavenly world, where they revel in common revelry with the gods.

**XVIII.4.11** Burn, O Agni, happily behind, happily in front; burn him happily above, happily below; being one, O Jātavedas, triply disposed, set him collectedly in the world of the well-doers.

**XVIII.4.12** Let the fires, kindled, take hold happily; let the Jātavedases, making done here him that is Prajāpati's (and) sacrificial, not throw him down.

**XVIII.4.13** The sacrifice goes, extended, adapting itself him who hath sacrificed, unto the heavenly world; let the fires enjoy it, made a whole oblation; let thc Jātavedases, making done here him that is Prajāpati's (and) sacrificial, not throw him down.

**XVIII.4.14** He that hath sacrificed hath ascended the piled fire, about to fly up to heaven from the back of the firmament; for him, the well-doer, shines forth from the welkin, full of light, the heavenly road, travelled by the gods.

अ॒ग्निर्होता॑ध्व॒र्युष्टे॒ बृह॒स्पति॒रिन्द्रो॑ ब्र॒ह्मा द॑क्षिण॒तस्ते॑ अस्तु ।
हु॒तोयं संस्थि॑तो य॒ज्ञ ए॑ति॒ यत्र॒ पूर्व॒मय॑नं हु॒ताना॑म् ॥१५॥
अ॒पू॒पवा॑न्क्षी॒रवाँ॑श्च॒रुरेह सीदतु ।
लो॒क॒कृत॑ः पथि॒कृतो॑ यजामहे॒ ये दे॒वानां॑ हु॒तभा॑गा इ॒ह स्थ ॥१६॥
अ॒पू॒पवा॑न्दधि॒वाँ॑श्च॒रुरेह सीदतु ।
लो॒क॒कृत॑ः पथि॒कृतो॑ यजामहे॒ ये दे॒वानां॑ हु॒तभा॑गा इ॒ह स्थ ॥१७॥
अ॒पू॒पवा॑न्द्र॒प्सवाँ॑श्च॒रुरेह सीदतु ।
लो॒क॒कृत॑ः पथि॒कृतो॑ यजामहे॒ ये दे॒वानां॑ हु॒तभा॑गा इ॒ह स्थ ॥१८॥
अ॒पू॒पवा॑न्घृ॒तवाँ॑श्च॒रुरेह सीदतु ।
लो॒क॒कृत॑ः पथि॒कृतो॑ यजामहे॒ ये दे॒वानां॑ हु॒तभा॑गा इ॒ह स्थ ॥१९॥
अ॒पू॒पवा॑न्मां॒सवाँ॑श्च॒रुरेह सीदतु ।
लो॒क॒कृत॑ः पथि॒कृतो॑ यजामहे॒ ये दे॒वानां॑ हु॒तभा॑गा इ॒ह स्थ ॥२०॥ (२९)

अ॒ग्निः । होता॑ । अ॒ध्व॒र्युः । ते॒ । बृह॒स्पति॑ः । इन्द्र॑ः । ब्र॒ह्मा । द॒क्षि॒ण॒तः । ते॒ । अ॒स्तु॒ ।
हु॒तः । अ॒यम् । सम्ऽस्थि॑तः । य॒ज्ञः । ए॒ति॒ । यत्र॑ । पूर्व॑म् । अय॑नम् । हु॒ताना॑म् ॥१५॥

अ॒पू॒पऽवा॑न् । क्षी॒रऽवा॑न् । च॒रुः । आ । इ॒ह । सी॒द॒तु॒ ।
लो॒क॒ऽकृत॑ः । प॒थि॒ऽकृत॑ः । य॒जा॒म॒हे॒ । ये । दे॒वाना॑म् । हु॒तऽभा॑गाः । इ॒ह । स्थ ॥ १६ ॥

अ॒पू॒पऽवा॑न् । दधि॑ऽवान् । च॒रुः । आ । इ॒ह । सी॒द॒तु॒ ।
लो॒क॒ऽकृत॑ः । प॒थि॒ऽकृत॑ः । य॒जा॒म॒हे॒ । ये । दे॒वाना॑म् । हु॒तऽभा॑गाः । इ॒ह । स्थ ॥ १७ ॥

अ॒पू॒पऽवा॑न् । द्र॒प्सऽवा॑न् । च॒रुः । आ । इ॒ह । सी॒द॒तु॒ ।
लो॒क॒ऽकृत॑ः । प॒थि॒ऽकृत॑ः । य॒जा॒म॒हे॒ । ये । दे॒वाना॑म् । हु॒तऽभा॑गाः । इ॒ह । स्थ ॥ १८ ॥

अ॒पू॒पऽवा॑न् । घृ॒तऽवा॑न् । च॒रुः । आ । इ॒ह । सी॒द॒तु॒ ।
लो॒क॒ऽकृत॑ः । प॒थि॒ऽकृत॑ः । य॒जा॒म॒हे॒ । ये । दे॒वाना॑म् । हु॒तऽभा॑गाः । इ॒ह । स्थ ॥ १९ ॥

अ॒पू॒पऽवा॑न् । मां॒सऽवा॑न् । च॒रुः । आ । इ॒ह । सी॒द॒तु॒ ।
लो॒क॒ऽकृत॑ः । प॒थि॒ऽकृत॑ः । य॒जा॒म॒हे॒ । ये । दे॒वाना॑म् । हु॒तऽभा॑गाः । इ॒ह । स्थ ॥ २० ॥

**XVIII.4.15** Agni thine invoker, Brhaspati thine officiating priest, be Indra on the right thy supervising priest; this offered sacrifice, being completed, goeth where is the ancient track of those offered.

**XVIII.4.16** Rich in cakes, rich in milk let the dish take seat here; to the world-makers, the road-makers, do we sacrifice, whoever of you are here, sharing in the oblation of the gods.

**XVIII.4.17** Rich in cakes, rich in curds, let the dish etc. etc.

**XVIII.4.18** Rich in cakes, rich in drops, let the dish etc. etc.

**XVIII.4.19** Rich in cakes, rich in ghee, let the dish etc. etc.

**XVIII.4.20** Rich in cakes, rich in flesh, let the dish etc. etc.

अपूपवानन्नवांश्चरुरेह सीदतु ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥२१॥
अपूपवान्मधुमांश्चरुरेह सीदतु ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥२२॥
अपूपवान्रसवांश्चरुरेह सीदतु ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥२३॥
अपूपवानपवांश्चरुरेह सीदतु ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥२४॥
अपूपापिहितान्कुम्भान्यांस्ते देवा अधारयन् ।
ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुतः ॥२५॥
यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः ।
तास्ते सन्तूद्भ्वीः प्रभ्वीस्तास्ते यमो राजानु मन्यताम् ॥२६॥

अपूपऽवान् । अन्नऽवान् । चरुः । आ । इह । सीदतु ।
लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ २१ ॥
अपूपऽवान् । मधुऽमान् । चरुः । आ । इह । सीदतु ।
लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ २२ ॥
अपूपऽवान् । रसऽवान् । चरुः । आ । इह । सीदतु ।
लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ २३ ॥
अपूपऽवान् । अपऽवान् । चरुः । आ । इह । सीदतु ।
लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ २४ ॥
अपूपऽअपिहितान् । कुम्भान् । यान् । ते । देवाः । अधारयन् ।
ते । ते । सन्तु । स्वधाऽवन्तः । मधुऽमन्तः । घृतऽश्चुतः ॥ २५ ॥
याः । ते । धानाः । अनुऽकिरामि । तिलऽमिश्राः । स्वधाऽवतीः ।
ताः । ते । सन्तु । उत्ऽभ्वीः । प्रऽभ्वीः । ताः । ते । यमः । राजा । अनु । मन्यताम् ॥ २६ ॥

**XVIII.4.21** Rich in cakes, rich in food, let the dish etc. etc.

**XVIII.4.22** Rich in cakes, rich in honey, let the dish etc. etc.

**XVIII.4.23** Rich in cakes, rich in sap, let the dish etc. etc.

**XVIII.4.24** Rich in cakes, rich in water, let the dish etc. etc.

**XVIII.4.25** What vessels covered with cakes the gods maintained for thee, be they for thee rich in svadhā, rich in honey, dripping with ghee.

**XVIII.4.26** What grains I scatter along for thee, mixed with same, rich in svadhā, be they for thee uprising, prevailing; them let king Yama approve for thee.

**अक्षितिं भूयसीम् ॥२७॥**
**द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।**
**समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥२८॥**
**शतधारं वायुमर्कं स्वर्विदं नृचक्षसस्ते अभि चक्षते रयिम् ।**
**ये पृणन्ति प्र च यच्छन्ति सर्वदा ते दुह्रते दक्षिणां सप्तमातरम् ॥२९॥**
**कोशं दुहन्ति कलशं चतुर्बिलमिडां धेनुं मधुमतीं स्वस्तये ।**
**ऊर्जं मदन्तीमदितिं जनेष्वग्ने मा हिंसीः परमे व्योमिन् ॥३०॥ (२२)**
**एतत्ते देवः सविता वासो ददाति भर्तवे ।**
**तत्त्वं यमस्य राज्ये वसानस्तार्प्यं चर ॥३१॥**
**धाना धेनुरभवद्वत्सो अस्यास्तिलोऽभवत् ।**
**तां वै यमस्य राज्ये अक्षितामुप जीवति ॥३२॥**

अक्षितिम् । भूयसीम् ॥ २७ ॥

द्रप्सः । चस्कन्द । पृथिवीम् । अनु । द्याम् । इमम् । च । योनिम् । अनु । यः । च । पूर्वः ।
समानम् । योनिम् । अनु । सम्ऽचरन्तम् । द्रप्सम् । जुहोमि । अनु । सप्त । होत्राः ॥ २८ ॥

शतऽधारम् । वायुम् । अर्कम् । स्वःऽविदम् । नृऽचक्षसः । ते । अभि । चक्षते । रयिम् ।
ये । पृणन्ति । प्र । च । यच्छन्ति । सर्वदा । ते । दुह्रते । दक्षिणाम् । सप्तऽमातरम् ॥ २९ ॥
कोशम् । दुहन्ति । कलशम् । चतुःऽबिलम् । इडाम् । धेनुम् । मधुऽमतीम् । स्वस्तये ।
ऊर्जम् । मदन्तीम् । अदितिम् । जनेषु । अग्ने । मा । हिंसीः । परमे । विऽओमन् ॥ ३० ॥

एतत् । ते । देवः । सविता । वासः । ददाति । भर्तवे ।
तत् । त्वम् । यमस्य । राज्ये । वसानः । तार्प्यम् । चर ॥ ३१ ॥
धानाः । धेनुः । अभवत् । वत्सः । अस्याः । तिलः । अभवत् ।
ताम् । वै । यमस्य । राज्ये । अक्षिताम् । उप । जीवति ॥ ३२ ॥

**XVIII.4.27** A more abundant inexhaustibleness.

**XVIII.4.28** The drop leaped toward the earth, the sky, toward both this lair and the one that was of old; of the drop that goes about toward the same lair do I make oblation, after seven invocations.

**XVIII.4.29** A hundred-streamed Vāyu, a heaven finding sun wealth, do those men-beholders look upon; who so bestow and present always, they milk a sacrificial gift having seven mothers.

**XVIII.4.30** They milk a receptacle, a jar with four orifices, iḍā (as) milch-cow rich in honey, in order to well-being; reveling refreshment Aditi among the people, injure thou not, O Agni, in the highest firmament.

**XVIII.4.31** The grains became a milch-cow; the sesame became her calf; upon her, unexhausted, one lives in Yama's realm.

**XVIII.4.32** This garment god Savitar gives thee to wear; putting on that which is tārpya, do thou go about in Yama's realm.

एतास्ते असौ धेनवः कामदुघा भवन्तु ।
एनीः श्येनीः सरूपा विरूपास्तिलवत्सा उप तिष्ठन्तु त्वात्र ॥३३॥
एनीर्धाना हरिणीः श्येनीरस्य कृष्णा धाना रोहिणीर्धेनवस्ते ।
तिलवत्सा ऊर्जमस्मै दुहाना विश्वाहा सन्त्वनपस्फुरन्तीः ॥३४॥
वैश्वानरे हविरिदं जुहोमि साहस्रं शतधारमुत्सम् ।
स बिभर्ति पितरं पितामहान्प्रपितामहान्बिभर्ति पिन्वमानः ॥३५॥
सहस्रधारं शतधारमुत्समक्षितं व्यच्यमानं सलिलस्य पृष्ठे ।
ऊर्जं दुहानमनपस्फुरन्तमुपासते पितरः स्वधाभिः ॥३६॥
इदं कसाम्बु चयनेन चितं तत्संजाता अव पश्यतेत ।
मर्त्योयममृतत्वमेति तस्मै गृहान्कृणुत यावत्सबन्धु ॥३७॥
इहैवैधि धनसनिरिहचित्त इहक्रतुः । इहेधि वीर्यवत्तरो वयोधा अपराहतः ॥३८॥

एताः । ते । असौ । धेनवः । कामऽदुघाः । भवन्तु ।
एनीः । श्येनीः । सऽरूपाः । विऽरूपाः । तिलऽवत्साः । उप । तिष्ठन्तु । त्वा । अत्र ॥
एनीः । धानाः । हरिणीः । श्येनीः । अस्य । कृष्णाः । धानाः । रोहिणीः । धेनवः । ते ।
तिलऽवत्साः । ऊर्जम् । अस्मै । दुहानाः । विश्वाहा । सन्तु । अनपऽस्फुरन्तीः ॥३४॥
वैश्वानरे । हविः । इदम् । जुहोमि । साहस्रम् । शतऽधारम् । उत्सम् ।
सः । बिभर्ति । पितरम् । पितामहान् । प्रऽपितामहान् । बिभर्ति । पिन्वमानः ॥ ३५ ॥
सहस्रऽधारम् । शतऽधारम् । उत्सम् । अक्षितम् । विऽअच्यमानम् । सलिलस्य । पृष्ठे ।
ऊर्जम् । दुहानम् । अनपऽस्फुरन्तम् । उप । आसते । पितरः । स्वधाभिः ॥ ३६ ॥
इदम् । कसाम्बु । चयनेन । चितम् । तत् । सऽजाताः । अव । पश्यत । आ । इत ।
मर्त्यः । अयम् । अमृतऽत्वम् । एति । तस्मै । गृहान् । कृणुत । यावत्ऽसबन्धु ॥ २७ ॥
इह । एव । एधि । धनऽसनिः । इहऽचित्तः । इहऽक्रतुः ।
इह । एधि । वीर्यवत्ऽतरः । वयःऽधाः । अपराऽहतः ॥ ३८ ॥

**XVIII.4.33** Be these, O so-and-so, thy milch-kine that yield what is desired; variegated, white, of like form, of different form, with sesame as calf, let them wait upon thee there.

**XVIII.4.34** Grains variegated, yellow, white, grains black, red, (be) thy much kine here; with sesame as calf, yielding him refreshment, be they ever unresisting.

**XVIII.4.35** In Vaiśvānara I offer this oblation, a thousand fold, hundred streamed fountain; it supports (our) father, grandfathers; (our) great-grandfathers it supports, swelling.

**XVIII.4.36** A thousand-streamed, hundred-streamed fountain, unexhausted expanded upon the back of the sea, yielding refreshment, unresisting, do the Fathers wait on at their will.

**XVIII.4.37** This funeral pile (is) piled with piling; come, ye (his) fellows, look down at it; this mortal goeth to immortality; make ye houses for him according to his kindred.

**XVIII.4.38** Be thou just here, winning riches, with thought here, with ability here; be thou here, very heroic, vigor-bestowing, not smitten away.

पुत्रं पौत्रमभितर्पयन्तीरापो मधुमतीरिमाः ।
स्वधां पितृभ्यो अमृतं दुहाना आपो देवीरुभयाँस्तर्पयन्तु ॥३९॥
आपो अग्निं प्र हिणुत पितॄँरुपेमं यज्ञं पितरो मे जुषन्ताम् ।
आसीनामूर्जमुप ये सचन्ते ते नो रयिं सर्ववीरं नि यच्छान् ॥४०॥ (२१)

समिन्धते अमर्त्यं हव्यवाहं घृतप्रियम् ।
स वेद निहितान्निधीन्पितॄन्परावतो गतान् ॥४१॥
यं ते मन्थं यमोदनं यन्मांसं निपृणामि ते ।
ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुतः ॥४२॥

यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः ।
तास्ते सन्तूद्भ्वीः प्रभ्वीस्तास्ते यमो राजानु मन्यताम् ॥४३॥
इदं पूर्वमपरं नियानं येना ते पूर्वे पितरः परेताः ।
पुरोगवा ये अभिशाचो अस्य ते त्वा वहन्ति सुकृतामु लोकम् ॥४४॥

पुत्रम् । पौत्रम् । अभिऽतर्पयन्तीः । आपः । मधुऽमतीः । इमाः ।
स्वधाम् । पितृऽभ्यः । अमृतम् । दुहानाः । आपः । देवीः । उभयान् । तर्पयन्तु ॥३९॥
आपः । अग्निम् । प्र । हिणुत । पितॄन् । उप । इमम् । यज्ञम् । पितरः । मे । जुषन्ताम् ।
आसीनाम् । ऊर्जम् । उप । ये । सचन्ते । ते । नः । रयिम् । सर्वऽवीरम् । नि । यच्छान् ॥ ४० ॥

सम् । इन्धते । अमर्त्यम् । हव्यऽवाहम् । घृतऽप्रियम् ।
सः । वेद । निऽहितान् । निऽधीन् । पितॄन् । पराऽवतः । गतान् ॥ ४१ ॥
यम् । ते । मन्थम् । यम् । ओदनम् । यत् । मांसम् । निऽपृणामि । ते ।
ते । ते । सन्तु । स्वधाऽवन्तः । मधुऽमन्तः । घृतऽश्चुतः ॥ ४२ ॥

याः । ते । धानाः । अनुऽकिरामि । तिलऽमिश्राः । स्वधाऽवतीः । ताः । ते । सन्तु ।
उत्ऽभ्वीः । प्रऽभ्वीः । ताः । ते । यमः । राजा । अनु । मन्यताम् ॥ ४३ ॥
इदम् । पूर्वम् । अपरम् । निऽयानम् । येन । ते । पूर्वे । पितरः । पराऽइताः ।
पुरःऽगवाः । ये । अभिऽसाचः । अस्य । ते । त्वा । वहन्ति । सुकृताम् । ऊं इति । लोकम् ॥

**XVIII.4.39** These waters, rich in honey, satisfying son (and) grandson, yielding to the Fathers svadhā (and) amṛta—let the heavenly waters gratify both sides.

**XVIII.4.40** O waters, send forth Agni unto the Fathers this sacrifice of mine let the Fathers enjoy; they who attach themselves unto a sitting refreshment, may they confirm to us wealth having all heroes.



**XVIII.4.41** They kindle the immortal one, oblation-carrying, ghee-loving; he knoweth the deposited deposits, the Fathers that are gone away to the distances.

**XVIII.4.42** What stir about for thee, what rice-dish, what flesh I offer to thee, be they for thee rich in svadhā, rich in honey, dripping with ghee.

**XVIII.4.43** What grains I scatter along for thee, mixed with sesame, rich in svadhā, be they for thee abundant, prevailing; them let king Yama approve for thee.

**XVIII.4.44** This (is) the former, the after down-track, by which thy former Fathers went away; they who are the forerunners, the followers of it, they carry thee to the world of the well-doing.

सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने ।
सरस्वतीं सुकृतो हवन्ते सरस्वती दाशुषे वार्यं दात् ॥४५॥
सरस्वतीं पितरो हवन्ते दक्षिणा यज्ञमभिनक्षमाणाः ।
आसद्यास्मिन्बर्हिषि मादयध्वमनमीवा इष आ धेह्यस्मे ॥४६॥
सरस्वति या सरथं ययाथोक्थैः स्वधाभिर्देवि पितृभिर्मदन्ती ।
सहस्रार्घमिडो अत्र भागं रायस्पोषं यजमानाय धेहि ॥४७॥
पृथिवीं त्वा पृथिव्यामा वेशयामि देवो नो धाता प्र तिरात्यायुः ।
परापरैता वसुविद्वो अस्त्वधा मृताः पितृषु सं भवन्तु ॥४८॥
आ प्र च्यवेथामप तन्मृजेथां यद्वामभिभा अत्रोचुः ।
अस्मादेतमघ्न्यौ तद्वशीयो दातुः पितृष्विहभोजनौ मम ॥४९॥
एयमगन्दक्षिणा भद्रतो नो अनेन दत्ता सुदुघा वयोधाः ।
यौवने जीवानुपपृञ्चती जरा पितृभ्य उपसंपराणयादिमान् ॥५०॥ (२४)

सरस्वतीम् । देवऽयन्तः । हवन्ते । सरस्वतीम् । अध्वरे । तायमाने ।
सरस्वतीम् । सुऽकृतः । हवन्ते । सरस्वती । दाशुषे । वार्यम् । दात् ॥ ४५ ॥
सरस्वतीम् । पितरः । हवन्ते । दक्षिणा । यज्ञम् । अभिऽनक्षमाणाः ।
आऽसद्य । अस्मिन् । बर्हिषि । मादयध्वम् । अनमीवाः । इषः । आ । धेहि । अस्मे इति ॥
सरस्वति । या । सऽरथम् । ययाथ । उक्थैः । स्वधाभिः । देवि । पितृऽभिः । मदन्ती ।
सहस्रऽअर्घम् । इडः । अत्र । भागम् । रायः । पोषम् । यजमानाय । धेहि ॥ ४७ ॥
पृथिवीम् । त्वा । पृथिव्याम् । आ । वेशयामि । देवः । नः । धाता । प्र । तिराति । आयुः ।
पराऽपरैता । वसुऽवित् । वः । अस्तु । अध । मृताः । पितृषु । सम् । भवन्तु ॥ ४८ ॥
आ । प्र । च्यवेथाम् । अप । तत् । मृजेथाम् । यत् । वाम् । अभिऽभाः । अत्र । ऊचुः ।
अस्मात् । आ । इतम् । अघ्न्यौ । तत् । वशीयः । दातुः । पितृषु । इहऽभोजनौ । मम ॥
आ । इयम् । अगन् । दक्षिणा । भद्रतः । नः । अनेन । दत्ता । सुऽदुघा । वयःऽधाः ।
यौवने । जीवान् । उपऽपृञ्चती । जरा । पितृऽभ्यः । उपऽसंपराणयात् । इमान् ॥ ५० ॥

## Sarasvatī

**XVIII.4.45** On Sarasvatī do the pious call; on Sarasvatī, while the sacrifice is being extended; on Sarasvatī do the well-doers call; may Sarasvatī give what is desirable to the worshiper.

**XVIII.4.46** On Sarasvatī do the Fathers call, arriving at the sacrifice on the south; sitting on this barhis, do ye revel; assign thou to us food free from disease.

**XVIII.4.47** O Sarasvatī, that wentest in company with the songs, with the svadhās, O goddess, revelling with the Fathers, assign thou to the sacrificer here a portion of refreshment of thousand-fold value, abundance of wealth.

**XVIII.4.48** Thee, being earth, I make enter into earth; may god Dhātar lengthen out our life-time; let him that goeth very far away be a finder of good for you; then may the dead come to be among the Fathers.

**XVIII.4.49** Start ye forward hither, wipe off that which the portents have said there of you; from that come ye, inviolable ones, to this which is better, being bestowers here on me, a giver to the Fathers.

**XVIII.4.50** This sacrificial gift hath come excellently to us, given by him, well-milking, vigor-bestowing; old age, coming close to them living in youth, shall lead these away together unto the Fathers.

इदं पितृभ्यः प्र भरामि बर्हिर्जीवं देवेभ्य उत्तरं स्तृणामि ।
तदा रोह पुरुष मेध्यो भवन्प्रति त्वा जानन्तु पितरः परेतम् ॥५१॥
एदं बर्हिरसदो मेध्योभूः प्रति त्वा जानन्तु पितरः परेतम् ।
यथापरु तन्वं संभरस्व गात्राणि ते ब्रह्मणा कल्पयामि ॥५२॥
पर्णो राजापिधानं चरूणामूर्जो बलं सह ओजो न आगन् ।
आयुर्जीवेभ्यो विदधद्दीर्घायुत्वाय शतशारदाय ॥५३॥
ऊर्जो भागो य इमं जजानाश्मान्नानामाधिपत्यं जगाम ।
तमर्चत विश्वमित्रा हविर्भिः स नो यमः प्रतरं जीवसे धात् ॥५४॥
यथा यमाय हर्म्यमवपन्पञ्च मानवाः ।
एवा वपामि हर्म्यं यथा मे भूरयोसत ॥५५॥
इदं हिरण्यं बिभृहि यत्ते पिताबिभः पुरा ।
स्वर्गं यतः पितुर्हस्तं निर्मृड्ढि दक्षिणम् ॥५६॥

इदम् । पितृऽभ्यः । प्र । भरामि । बर्हिः । जीवम् । देवेभ्यः । उत्ऽतरम् । स्तृणामि ।
तत् । आ । रोह । पुरुष । मेध्यः । भवन् । प्रति । त्वा । जानन्तु । पितरः । पराऽइतम् ॥
आ । इदम् । बर्हिः । असदः । मेध्यः । अभूः । प्रति । त्वा । जानन्तु । पितरः । पराऽइतम् ।
यथाऽपरु । तन्वम् । सम् । भरस्व । गात्राणि । ते । ब्रह्मणा । कल्पयामि ॥ ५२ ॥
पर्णः । राजा । अपिऽधानम् । चरूणाम् । ऊर्जः । बलम् । सहः । ओजः । नः । आ ।
अगन् । आयुः । जीवेभ्यः । विऽदधत् । दीर्घायुऽत्वाय । शतऽशारदाय ॥ ५३ ॥
ऊर्जः । भागः । यः । इमम् । जजान । अश्मा । अन्नानाम् । आधिऽपत्यम् । जगाम ।
तम् । अर्चत । विश्वऽमित्राः । हविःऽभिः । सः । नः । यमः । प्रऽतरम् । जीवसे । धात् ॥५४॥
यथा । यमाय । हर्म्यम् । अवपन् । पञ्च । मानवाः ।
एव । वपामि । हर्म्यम् । यथा । मे । भूरयः । असत ॥ ५५ ॥
इदम् । हिरण्यम् । बिभृहि । यत् । ते । पिता । अबिभः । पुरा ।
स्वःऽगम् । यतः । पितुः । हस्तम् । निः । मृड्ढि । दक्षिणम् ॥ ५६ ॥

**XVIII.4.51** This barhis I bring forward for the Fathers; a living, higher one I strew for the gods; that do thou ascend, O man, becoming sacrificial let the Fathers acknowledge thee who art departed.

**XVIII.4.52** Thou hast sat upon this barhis, thou hast become sacrificial; let the Fathers acknowledge thee who art departed; collect thy body according to its joints; I arrange thy members with brahman.

**XVIII.4.53** King leaf is the cover of the dishes; the strength of refreshment, the power, vigor, hath come to us, dispensing life-time to the living, in order to length of life for a hundred autumns.

**XVIII.4.54** The share of refreshment that generated this man; the stone attained the overlordship of the foods – him praise ye, all befriended with oblations; may that yama make us to live further.

**XVIII.4.55** As the five clans scattered a dwelling for Yama, so do I scatter a dwelling, that there may be many of me.

**XVIII.4.56** Wear thou this gold, which thy father wore before; of thy father, going to heaven, do thou wipe off the right hand.

ये च॑ जी॒वा ये च॑ मृ॒ता ये जा॒ता ये च॑ य॒ज्ञियाः॑ ।
तेभ्यो॑ घृ॒तस्य॑ कु॒ल्यै॑तु॒ मधु॑धारा व्यु॒न्द॒ती ॥५७॥
वृषा॑ मती॒नां प॑वते विचक्ष॒णः सूरो॒ अह्नां॑ प्र॒तरी॑तो॒षसां॑ दि॒वः ।
प्रा॒णः सिन्धू॑नां क॒लशाँ॑ अचिक्रद॒दिन्द्र॑स्य॒ हार्दि॑मावि॒शन्म॑नी॒षया॑ ॥५८॥
त्वे॒षस्ते॑ धू॒म ऊ॑र्णोतु दि॒वि षं॑च्छु॒क्र आत॑तः ।
सूरो॒ न हि द्यु॒ता त्वं कृ॒पा पा॑वक॒ रोच॑से ॥५९॥
प्र वा ए॒तीन्दु॒रिन्द्र॑स्य॒ निष्कृ॑तिं॒ सखा॒ सख्यु॒र्न प्र मि॑नाति सं॒गिरः॑ ।
मर्य॑ इव॒ योषाः॑ सम॑र्षसे॒ सोमः॑ क॒लशे॑ श॒तया॑मना प॒था ॥६०॥ (३४)
अक्ष॒न्नमी॑मदन्त॒ ह्यव॑ प्रि॒याँ अ॑धूषत । अस्तो॑षत॒ स्वभा॑नवो॒ विप्रा॒ यवि॑ष्ठा ईमहे ॥६१॥
आ या॑त पितरः सो॒म्यासो॑ गम्भी॒रैः॑ प॒थिभिः॑ पितृ॒याणैः॑ ।
आयु॑र॒स्मभ्यं॑ दध॑तः प्र॒जां च॑ रा॒यश्च॒ पोषै॑र॒भि नः॑ सचध्वम् ॥६२॥

ये । च॒ । जी॒वाः । ये । च॒ । मृ॒ताः । ये । जा॒ताः । ये । च॒ । य॒ज्ञियाः॑ ।
तेभ्यः॑ । घृ॒तस्य॑ । कु॒ल्या॒ऽ । ए॒तु॒ । मधु॑ऽधारा । वि॒ऽउ॒न्द॒ती ॥ ५७ ॥
वृषा॑ । म॒ती॒नाम् । प॒व॒ते॒ । वि॒ऽच॒क्ष॒णः । सूरः॑ । अह्ना॑म् । प्र॒ऽतरी॑ता । उ॒षसा॑म् । दि॒वः ।
प्रा॒णः । सिन्धू॑नाम् । क॒लशा॑न् । अ॒चि॒क्र॒द॒त् । इन्द्र॑स्य । हार्दि॑म् । आ॒ऽवि॒शन् । म॒नी॒षया॑ ॥
त्वे॒षः । ते॒ । धू॒मः । ऊ॒र्णो॒तु॒ । दि॒वि । सन् । शु॒क्रः । आऽत॑तः ।
सूरः॑ । न । हि । द्यु॒ता । त्वम् । कृ॒पा । पा॒व॒क॒ । रोच॑से ॥ ५९ ॥
प्र । वै । ए॒ति॒ । इन्दुः॑ । इन्द्र॑स्य । निःऽकृ॑तिम् । सखा॑ । सख्युः॑ । न । प्र । मि॒ना॒ति॒ । स॒म्ऽगि॒रः ।
मर्यः॑ऽइव । योषाः॑ । सम् । अ॒र्ष॒से॒ । सोमः॑ । क॒लशे॑ । श॒तऽया॑मना । प॒था ॥ ६० ॥
अक्ष॑न् । अमी॑मदन्त । हि । अव॑ । प्रि॒यान् । अ॒धू॒ष॒त॒ ।
अस्तो॑षत । स्वऽभा॑नवः । विप्राः॑ । यवि॑ष्ठाः । ई॒म॒हे॒ ॥ ६१ ॥
आ । या॒त॒ । पि॒त॒रः॒ । सो॒म्यासः॑ । ग॒म्भी॒रैः । प॒थिऽभिः॑ । पि॒तृ॒ऽयानैः॑ ।
आयुः॑ । अ॒स्मभ्य॑म् । दध॑तः । प्र॒ऽजाम् । च॒ । रा॒यः । च॒ । पोषैः॑ । अ॒भि । नः॒ । स॒च॒ध्व॒म् ॥६२॥

**XVIII.4.57** Both those who are living and those who are dead; those who are born and those who are worshipful – for them let there go a brook of ghee, honey-streamed, overflowing.

**XVIII.4.58** There purifies itself the conspicuous bull of the prayers, the sun of days, lengthener out of dawns, of the sky; the breath of the rivers hath made the jars to resound loudly; entering Indra's heart with skill.

**XVIII.4.59** Let thy sparkling smoke cover, being in the sky, extended bright; for thou, O purifier, shinest like the sun with luster, with beauty.

**XVIII.4.60** Soma verily goes forward to Indra's rendezvous; the comrade does not violate the comrade's agreements; thou rushest to join, as a male after female – soma, in the jar, by a road of a hundred tracks.

**XVIII.4.61** They have eaten; they have revelled (surely); they have shaken off those that are dear; having own brightness, they have praised: inspired, youngest, we implore.

**XVIII.4.62** Come ye, O Fathers, delectable, by profound roads that the Fathers travel, assigning to us lifetime and progeny; and do ye attach yourselves to us with abundances of wealth.

परा यात पितरः सोम्यासो गम्भीरैः पथिभिः पूर्याणैः ।
अधा मासि पुनरा यात नो गृहान्हविरत्तुं सुप्रजसः सुवीराः ॥६३॥
यद्वो अग्निरजहादेकमङ्गं पितृलोकं गमयं जातवेदाः ।
तद्व एतत्पुनरा प्याययामि साङ्गाः स्वर्गे पितरो मादयध्वम् ॥६४॥
अभूद्दूतः प्रहितो जातवेदाः सायं न्यह्न उपवन्द्यो नृभिः ।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषि ॥६५॥
असौ हा इह ते मनः ककुत्सलमिव जामयः । अभ्येनं भूम ऊर्णुहि ॥६६॥
शुम्भन्तां लोकाः पितृषदनाः पितृषदने त्वा लोक आ सादयामि ॥६७॥
येऽस्माकं पितरस्तेषां बर्हिरसि ॥६८॥
उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अधा वयमादित्य व्रते तवानागसो अदितये स्याम ॥६९॥

परा । यात । पितरः । सोम्यासः । गम्भीरैः । पथिऽभिः । पूःऽयानैः ।
अध । मासि । पुनः । आ । यात । नः । गृहान् । हविः । अत्तुम् । सुऽप्रजसः । सुऽवीराः ॥
यत् । वः । अग्निः । अजहात् । एकम् । अङ्गम् । पितृऽलोकम् । गमयन् । जातऽवेदाः ।
तत् । वः । एतत् । पुनः । आ । प्याययामि । सऽअङ्गाः । स्वःऽगे । पितरः । मादयध्वम् ॥
अभूत् । दूतः । प्रऽहितः । जातऽवेदाः । सायम् । निऽअह्ने । उपऽवन्द्यः । नृऽभिः ।
प्र । अदाः । पितृऽभ्यः । स्वधया । ते । अक्षन् । आद्धि । त्वम् । देव । प्रऽयता । हवींषि ॥
असौ । है । इह । ते । मनः । ककुत्सलम्ऽइव । जामयः । अभि । एनम् । भूमे । ऊर्णुहि ॥६६॥
शुम्भन्ताम् । लोकाः । पितृऽसदनाः । पितृऽसदने । त्वा । लोके । आ । सादयामि ॥६७॥
ये । अस्माकम् । पितरः । तेषाम् । बर्हिः । असि ॥ ६८ ॥
उत् । उत्ऽतमम् । वरुण । पाशम् । अस्मत् । अव । अधमम् । वि । मध्यमम् । श्रथय ।
अध । वयम् । आदित्य । व्रते । तव । अनागसः । अदितये । स्याम ॥ ६९ ॥

**XVIII.4.63** Go away, O Fathers, delectable, by profound roads that go to the stronghold; then, in a month, come ye again to our houses to eat the oblation, with good progeny, with good heroes.

**XVIII.4.64** What one limb of you Agni Jātavedas left when making you go to the Father's world, that same for you I fill up again; revel ye, O Fathers, in heaven with (all) your limbs.

**XVIII.4.65** Jātavedas has been the messenger sent forth, at evening, at close of day to be honored by men;–thou hast given to the Fathers; they have eaten after their wont; eat thou, O god, the presented oblation.

**XVIII.4.66** Thou yonder, ho ! hither thy mind ! as sisters a kakutsala, do thou cover him, O earth.

**XVIII.4.67** Let the worlds where the Fathers sit adorn themselves; I make thee to sit in the world where the Fathers sit.

**XVIII.4.68** Thou art the barhis of them that are our Fathers.

**XVIII.4.69** Loosen up the uppermost fetter from us, O Varuna, down the lowest, off the midmost; then may we in thy sphere, O Āditya, be guiltless unto Aditi.

प्रास्मत्पाशान्वरुण मुञ्च सर्वान्यैः समामे बध्यते यैर्व्यामे ।
अधा जीवेम शरदं शतानि त्वया राजन्गुपिता रक्षमाणाः ॥७०॥ (२१)
अग्नये कव्यवाहनाय स्वधा नमः ॥७१॥
सोमाय पितृमते स्वधा नमः ॥७२॥
पितृभ्यः सोमवद्भ्यः स्वधा नमः ॥७३॥
यमाय पितृमते स्वधा नमः ॥७४॥
एतत्ते प्रततामह स्वधा ये च त्वामनु ॥७५॥
एतत्ते ततामह स्वधा ये च त्वामनु ॥७६॥
एतत्ते तत स्वधा ॥७७॥
स्वधा पितृभ्यः पृथिविषद्भ्यः ॥७८॥

प्र । अस्मत् । पाशान् । वरुण । मुञ्च । सर्वान् । यैः । सम्ऽआमे । बध्यते । यैः । विऽआमे ।
अध । जीवेम । शरदम् । शतानि । त्वया । राजन् । गुपिताः । रक्षमाणाः ॥ ७० ॥
अग्नये । कव्यऽवाहनाय । स्वधा । नमः ॥ ७१ ॥
सोमाय । पितृऽमते । स्वधा । नमः ॥ ७२ ॥
पितृऽभ्यः । सोमवत्ऽभ्यः । स्वधा । नमः ॥ ७३ ॥
यमाय । पितृऽमते । स्वधा । नमः ॥ ७४ ॥
एतत् । ते । प्रऽततामह । स्वधा । ये । च । त्वाम् । अनु ॥ ७५ ॥
एतत् । ते । ततामह । स्वधा । ये । च । त्वाम् । अनु ॥ ७६ ॥
एतत् । ते । तत । स्वधा ॥ ७७ ॥
स्वधा । पितृऽभ्यः । पृथिविसत्ऽभ्यः ॥ ७८ ॥

**XVIII.4.70** Release from us all fetters, O Varuna, with which one is bound crosswise, with which lengthwise; so may we live hundred of autumns by thee, O king, guarded, defended.

**XVIII.4.71** To Agni, carrier of the kavyas, (be) svadhā (and) homage.

**XVIII.4.72** To Soma with the Fathers (be) svadhā (and) homage.

**XVIII.4.73** To the Fathers with Soma, svadhā (and) homage.

**XVIII.4.74** To Yama with the Fathers, svadhā (and) homage.

**XVIII.4.75** Here is the svadhā for thee, O great-grandfather and for them that are after thee.

**XVIII.4.76** Here is Svadhā for thee, O grandfather, and for them that are after thee.

**XVIII.4.77** Here is svadhā for thee, O father.

**XVIII.4.78** Svadhā to the Fathers that sit upon the earth.

स्वधा पितृभ्यो अन्तरिक्षसद्भ्यः ॥७९॥
स्वधा पितृभ्यो दिविषद्भ्यः ॥८०॥ (२७)
नमो वः पितर ऊर्जे नमो वः पितरो रसाय ॥८१॥
नमो वः पितरो भामाय नमो वः पितरो मन्यवे ॥८२॥
नमो वः पितरो यद्घोरं तस्मै नमो वः पितरो यत्क्रूरं तस्मै ॥८३॥
नमो वः पितरो यच्छिवं तस्मै नमो वः पितरो यत्स्योनं तस्मै ॥८४॥
नमो वः पितरः स्वधा वः पितरः ॥८५॥
येऽत्र पितरः पितरो येऽत्र यूयं स्थ युष्मांस्तेऽनु यूयं तेषां श्रेष्ठा भूयास्थ ॥८६॥

स्वधा । पितृऽभ्यः । अन्तरिक्षसत्ऽभ्यः ॥ ७९ ॥

स्वधा । पितृऽभ्यः । दिविसत्ऽभ्यः ॥ ८० ॥

नमः । वः । पितरः । ऊर्जे । नमः । वः । पितरः । रसाय ॥ ८१ ॥

नमः । वः । पितरः । भामाय । नमः । वः । पितरः । मन्यवे ॥ ८२ ॥

नमः । वः । पितरः । यत् । घोरम् । तस्मै । नमः । वः । पितरः । यत् । क्रूरम् । तस्मै ॥

नमः । वः । पितरः । यत् । शिवम् । तस्मै । नमः । वः । पितरः । यत् । स्योनम् । तस्मै ॥

नमः । वः । पितरः । स्वधा । वः । पितरः ॥ ८५ ॥

ये । अत्र । पितरः । पितरः । ये । अत्र । यूयम् । स्थ । युष्मान् । ते । अनु । यूयम् । तेषाम् । श्रेष्ठाः । भूयास्थ ॥ ८६ ॥

**XVIII.4.79** Svadhā to the Fathers that sit in the atmosphere.

**Pitarah**

**XVIII.4.80** Svadhā to the Fathers that sit in the sky.

**XVIII.4.81** Homage, O Fathers, to your refreshment; homage, O Fathers, to your sap.

**XVIII.4.82** Homage, O Fathers, to your terror; homage, O Fathers, to your fury.

**XVIII.4.83** Homage, O Fathers, to that of yours which is terrible; homage, O Fathers, to that of yours which is cruel.

**XVIII.4.84** Homage, O Fathers, to that of yours which is propitious; homage, O Fathers, to that of your's which is pleasant.

**XVIII.4.85** Homage to you, O Fathers; svadhā to you, O Fathers.

**XVIII.4.86** They who are there, O Fathers – Fathers there are ye – (be) they after you; may ye be the best of them.

य इह पितरो जीवा इह वयं स्मः । अस्माँस्तेनु वयं तेषां श्रेष्ठा भूयास्म ॥८७॥
आ त्वाग्न इधीमहि द्युमन्तं देवाजरम् ।
यद्घ सा ते पनीयसी समिद्दीदयति द्यवि । इषं स्तोतृभ्य आ भर ॥८८॥
चन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि ।
न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी ॥८९॥ (२८)

ये । इह । पितरः । जीवाः । इह । वयम् । स्मः । अस्मान् । ते । अनु । वयम् । तेषाम् । श्रेष्ठाः । भूयास्म ॥

आ । त्वा । अग्ने । इधीमहि । द्युऽमन्तम् । देव । अजरम् । यत् । घ । सा । ते । पनीयसी । समऽइत् । दीदयति । द्यवि । इषम् । स्तोतृऽभ्यः । आ । भर ॥ ८८ ॥

चन्द्रमाः । अप्ऽसु । अन्तः । आ । सुऽपर्णः । धावते । दिवि । न । वः । हिरण्यऽनेमयः । पदम् । विन्दन्ति । विऽद्युतः । वित्तम् । मे । अस्य । रोदसी इति ॥ ८९ ॥

॥ इत्यष्टादशं काण्डम् ॥

[ सूक्तानि ४, ऋचः २८३ ]

**XVIII.4.87** They who are here, O Fathers – alive here are we – (be) they after us; may we be the best of them.

**Agni**

**XVIII.4.88** Thee, O Agni, would we kindle, full of light, O god, unwasting; as that very wondrous fuel of thine shall shine in the sky, bring thou food for thy praisers.

**Candramā : the moon**

**XVIII.4.89** The moon among the waters runs, an eagle in the sky; they find not your track, O golden-rimmed lightnings; know me as such, O firmaments.

---

**Here ends Kānda XVIII**
**Hymns 4, Verses 283**

---

# अथैकोनविंशं काण्डम् ॥

## ( १ ) प्रथमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । यज्ञश्चन्द्रमाश्च देवते । (१-२) प्रथमाद्वितीययोर्ऋचोः पथ्याबृहती, (३) तृतीयायाश्च पङ्क्तिश्छन्दसी ॥

सं सं स्रवन्तु नद्यः सं वाताः सं पतत्रिणः ।
यज्ञमिमं वर्धयता गिरः संस्राव्येण हविषा जुहोमि ॥१॥
इमं होमा यज्ञमवतेमं संस्रावणा उत ।
यज्ञमिमं वर्धयता गिरः संस्राव्येण हविषा जुहोमि ॥२॥
रूपंरूपं वयोवयः संरभ्यैनं परि ष्वजे ।
यज्ञमिमं चतस्रः प्रदिशो वर्धयन्तु संस्राव्येण हविषा जुहोमि ॥३॥

समऽसम् । स्रवन्तु । नद्यः । सम् । वाताः । सम् । पतत्रिणः ।
यज्ञम् । इमम् । वर्धयत । गिरः । समऽस्राव्येण । हविषा । जुहोमि ॥ १ ॥
इमम् । होमाः । यज्ञम् । अवत । इमम् । समऽस्रावणाः । उत ।
यज्ञम् । इमम् । वर्धयत । गिरः । समऽस्राव्येण । हविषा । जुहोमि ॥ २ ॥
रूपम्ऽरूपम् । वयःऽवयः । सम्ऽरभ्य । एनम् । परि । स्वजे ।
यज्ञम् । इमम् । चतस्रः । प्रऽदिशः । वर्धयन्तु । समऽस्राव्येण । हविषा । जुहोमि ॥३॥

## ( २ ) द्वितीयं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्य सिन्धुद्वीप ऋषिः । आपो देवताः । अनुष्टुप् छन्दः ॥

शं त आपो हैमवतीः शमु ते सन्तूत्स्याः ।
शं ते सनिष्यदा आपः शमु ते सन्तु वर्ष्याः ॥१॥

शम् । ते । आपः । हैमऽवतीः । शम् । ऊं इति । ते । सन्तु । उत्स्याः ।
शम् । ते । सनिस्यदाः । आपः । शम् । ऊं इति । ते । सन्तु । वर्ष्याः ॥ १ ॥

## Oblation for Confluence

**XIX.1.1** To meet together, may the noisy streams flow the winds below and the birds flock. May the sacred hymns augment this sacrifices. I hereby perform a sacrifice of confluence (offer an oblation of confluence).

**XIX.1.2** O burnt oblations, may you protect this sacrifice, and also you, oblations of confluence. May the sacred hymns augment this sacrifice. I hereby perform a sacrifice of confluence.

**XIX.1.3** With due consideration to each and every beauty of each and every age, I surround him (the sacrifice). May the four mid-quarters augment this sacrifice. I hereby perform a sacrifice of confluence.

## Praise and prayer to the Waters

**XIX.2.1** Auspicious to you be the waters of the snowy mountain, auspicious to you the spring waters; auspicious to you the fast-running waters, auspicious to you be the waters of rain.

शं त आपो धन्वन्या३ः शं ते सन्त्वनूप्याः ।
शं ते खनित्रिमा आपः शं याः कुम्भेभिराभृताः ॥२॥
अनभ्रयः खनमाना विप्रा गम्भीरे अपसः ।
भिषग्भ्यो भिषक्तरा आपो अच्छा वदामसि ॥३॥
अपामह दिव्यानामपां स्रोतस्यानाम् ।
अपामह प्रणेजनेऽश्वा भवथ वाजिनः ॥४॥
ता अपः शिवा अपोऽयक्ष्मंकरणीरपः ।
यथैव तृप्यते मयस्तास्त आ दत्त भेषजीः ॥५॥

शम् । ते । आपः । धन्वन्याः । शम् । ते । सन्तु । अनूप्याः ।
शम् । ते । खनित्रिमाः । आपः । शम् । याः । कुम्भेभिः । आऽभृताः ॥ २ ॥

अनभ्रयः । खनमानाः । विप्राः । गम्भीरे । अपसः ।
भिषक्ऽभ्यः । भिषक्ऽतराः । आपः । अच्छ । वदामसि ॥ ३ ॥

अपाम् । अह । दिव्यानाम् । अपाम् । स्रोतस्यानाम् । अपाम् । अह । प्रऽनेजने ।
अश्वाः । भवथ । वाजिनः ॥ ४ ॥

ताः । अपः । शिवाः । अपः । अयक्ष्मम्ऽकरणीः । अपः ।
यथा । एव । तृप्यते । मयः । ताः । ते । आ । दत्त । भेषजीः ॥ ५ ॥

( ३ ) तृतीयं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः । अग्निर्देवता । (१, ३–४) प्रथमातृतीयाचतुर्थीनामृचां त्रिष्टुप्, (२) द्वितीयायाश्च भुरिक्त्रिष्टुप् छन्दसी ॥

दिवस्पृथिव्याः पर्यन्तरिक्षाद्वनस्पतिभ्यो अध्योषधीभ्यः ।
यत्रयत्र विभृतो जातवेदास्तत स्तुतो जुषमाणो न एहि ॥१॥

दिवः । पृथिव्याः । परि । अन्तरिक्षात् । वनस्पतिऽभ्यः । अधि । ओषधीभ्यः ।
यत्रऽयत्र । विऽभृतः । जातऽवेदाः । ततः । स्तुतः । जुषमाणः । नः । आ । इहि ॥१॥

**XIX.2.2** Auspicious to you be the waters of deserts, auspicious to you the waters of the marshlands, auspicious to you be the waters, that have been brought in the pitchers.

**XIX.2.3** Digging without shovels, expert in going deep, far better healers than the leeches are the waters; I praise them.

**XIX.2.4** For cleaning the waters, other than those coming from the sky, and other than those obtained from the flowing streams, be quick and speedy.

**XIX.2.5** Those auspicious waters, those waters that cure the wasting disease - they have brought for you, so that you may have more comfort.

### Praise to Agni

**XIX.3.1** From the sky, from the earth, from the midspace, from the forest trees, from the medicinal plants, wheresoever you have been held, thence, O cognizant of all, come to us, praised and well pleased.

यस्ते अप्सु महिमा यो वनेषु य ओषधीषु पशुष्वप्स्व१न्तः ।
अग्ने सर्वास्तन्व१ः सं रभस्व ताभिर्न एहि द्रविणोदा अजस्रः ॥२॥
यस्ते देवेषु महिमा स्वर्गो या ते तनूः पितृष्वाविवेश ।
पुष्टिर्या ते मनुष्येषु पप्रथेऽग्ने तया रयिमस्मासु धेहि ॥३॥
श्रुत्कर्णाय कवये वेद्याय वचोभिर्वाकैरुप यामि रातिम् ।
यतो भयमभयं तन्नो अस्त्वव देवानां यज हेडो अग्ने ॥४॥

यः । ते । अप्ऽसु । महिमा । यः । वनेषु । यः । ओषधीषु । पशुषु । अप्ऽसु । अन्तः ।
अग्ने । सर्वाः । तन्वः । सम । रभस्व । ताभिः । नः । आ । इहि । द्रविणःऽदाः । अजस्रः ॥२॥

यः । ते । देवेषु । महिमा । स्वःऽगः । या । ते । तनूः । पितृषु । आऽविवेश ।
पुष्टिः । या । ते । मनुष्येषु । पप्रथे । अग्ने । तया । रयिम् । अस्मासु । धेहि ॥ ३ ॥

श्रुत्ऽकर्णाय । कवये । वेद्याय । वचःऽभिः । वाकैः । उप । यामि । रातिम् । यतः । भयम् ।
अभयम् । तत् । नः । अस्तु । अव । देवानाम् । यज । हेडः । अग्ने ॥ ४ ॥

( ४ ) चतुर्थं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः । (१, ३-४) प्रथमातृतीयाचतुर्थीनामृचामग्निः,
(२) द्वितीयायाश्च मन्त्रोक्ता देवताः । (१) प्रथमर्चः पञ्चपदा विराडतिजगती,
(२) द्वितीयाया जगती, (३-४) तृतीयाचतुर्थ्योश्च त्रिष्टुप् छन्दांसि ॥

यामाहुतिं प्रथमामथर्वा या जाता या हव्यमकृणोज्जातवेदाः ।
तां त एतां प्रथमो जोहवीमि ताभिष्टुप्तो वहतु हव्यमग्निरग्नये स्वाहा ॥१॥

याम् । आऽहुतिम् । प्रथमाम् । अथर्वा । या । जाता । या । हव्यम् । अकृणोत् ।
जातऽवेदाः । ताम् । ते । एताम् । प्रथमः । जोहवीमि । ताभिः । स्तुप्तः । वहतु ।
हव्यम् । अग्निः । अग्नये । स्वाहा ॥ १ ॥

**XIX.3.2** What majesty of yours is there in the waters, in the forests, in the medicinal plants, in the animals, and within the waters (held in midspace, i.e., the clouds); O fire divine, collect all your forms together, and with those may you come to us, a constant bestower of wealth.

**XIX.3.3** O adorable Lord, what majesty of yours is there in the enlightened ones in the heaven; your form that has entered into the elders; and your nourishment, that sustains men (and all living beings), therewith may you grant us riches.

**XIX.3.4** To Him of listening ears, omnivisioned, and worthy of knowing, I approach with verses and hymns for fulfilment of my wishes. From where there is fear, may that be no fear to us. O adorable Lord, may you pacify the anger of the bounties of Nature (towards us).

### To Various divinities

**XIX.4.1** What first offering the fire-inventor (Atharvan) made, which was born and which the cognizant of all beings (Jātavedas) made an sacrificial oblation, that (oblation) I offer to you first; praised by them, may the fire divine carry the oblation I dedicate it to the adorable Lord.

आकूतिं देवीं सुभगां पुरो दधे चित्तस्य माता सुहवा नो अस्तु ।
यामाशामेमि केवली सा मे अस्तु विदेयमेनां मनसि प्रविष्टाम् ॥२॥
आकूत्या नो बृहस्पत आकूत्या न उपा गहि ।
अथो भगस्य नो धेह्यथो नः सुहवो भव ॥३॥
बृहस्पतिर्म आकूतिमाङ्गिरसः प्रति जानातु वाचमेताम् ।
यस्य देवा देवताः संबभूवुः स सुप्रणीताः कामो अन्वेत्वस्मान् ॥४॥

आऽकूतिम् । देवीम् । सुऽभगाम् । पुरः । दधे । चित्तस्य । माता । सुऽहवा । नः । अस्तु ।
याम् । आऽशाम् । एमि । केवली । सा । मे । अस्तु । विदेयम् । एनाम् । मनसि । प्रऽविष्टाम् ॥२॥
आऽकूत्या । नः । बृहस्पते । आऽकूत्या । नः । उप । आ । गहि ।
अथो इति । भगस्य । नः । धेहि । अथो इति । नः । सुऽहवः । भव ॥ ३ ॥
बृहस्पतिः । मे । आऽकूतिम् । आङ्गिरसः । प्रति । जानातु । वाचम् । एताम् । यस्य ।
देवाः । देवताः । सम्ऽबभूवुः । सः । सुऽप्रनीताः । कामः । अनु । एतु । अस्मान् ॥४॥

( ५ ) पञ्चमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः ॥

इन्द्रो राजा जगतश्चर्षणीनामधि क्षमि विषुरूपं यदस्ति ।
ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतश्चिदर्वाक् ॥१॥

इन्द्रः । राजा । जगतः । चर्षणीनाम् । अधि । क्षमि । विषुऽरूपम् । यत् । अस्ति ।
ततः । ददाति । दाशुषे । वसूनि । चोदत् । राधः । उपऽस्तुतः । चित् । अर्वाक् ॥१॥

( ६ ) षष्ठं सूक्तम्

(१-१६) षोडशर्चस्यास्य सूक्तस्य नारायण ऋषिः । पुरुषो देवता । अनुष्टुप् छन्दः ॥

सहस्रबाहुः पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥१॥

सहस्रऽबाहुः । पुरुषः । सहस्रऽअक्षः । सहस्रऽपात् ।
सः । भूमिम् । विश्वतः । वृत्वा । अति । अतिष्ठत् । दशऽअङ्गुलम् ॥ १ ॥

**XIX.4.2** I place foremost the determination, divine and fortunate; the mother of intention, may she be easy to invoke for us. With whichever expectation I move, may that be exclusively mine. May I gain it, which has entered my heart.

**XIX.4.3** With determination, O Lord supreme, with determination come to us. Then, may you grant us fortune; and may you be quick to hear our invocation.

**XIX.4.4** May the wise and brilliant Lord Supreme know this determination and this speech of mine; all the enlightened ones and the bounties of nature have submitted to whose control, let that well-conducted desire follow us.

## Prayer to Indra

**XIX.5.1** The resplendent Lord is the sovereign of the world, of men, and of all, whatsoever, that exists on this earth in various forms. He gives riches to the liberal donor. Praised (by us) may He direct wealth towards us. (Rg.VII.23.3)

## Puruṣa

**XIX.6.1** Thousand-armed is Purusa (cosmic man), having a thousand eyes and a thousand feet. Surrounding the earth (i.e., the universe) on all the sides, He exceeds it by ten finger-breaths. (Yv. XXXI.1. Vari.; Rv. X.90)

त्रिभिः पद्भिर्द्यामरोहत्पादस्येहाभवत्पुनः ।
तथा व्यक्रामद्विष्वङशनानशने अनु ॥२॥
तावन्तो अस्य महिमानस्ततो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥३॥
पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येश्वरो यदन्येनाभवत्सह ॥४॥
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य किं बाहू किमूरू पादा उच्येते ॥५॥
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्योऽभवत् ।
मध्यं तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥६॥
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥७॥

त्रिऽभिः । पत्ऽभिः । द्याम् । अरोहत् । पात् । अस्य । इह । अभवत् । पुनः ।
तथा । वि । अक्रामत् । विष्वङ् । अशनानशने इत्यशनऽअनशने । अनु ॥ २ ॥
तावन्तः । अस्य । महिमानः । ततः । ज्यायान् । च । पुरुषः ।
पादः । अस्य । विश्वा । भूतानि । त्रिऽपात् । अस्य । अमृतम् । दिवि ॥ ३ ॥
पुरुषः । एव । इदम् । सर्वम् । यत् । भूतम् । यत् । च । भाव्यम् ।
उत । अमृतऽत्वस्य । ईश्वरः । यत् । अन्येन । अभवत् । सह ॥ ४ ॥
यत् । पुरुषम् । वि । अदधुः । कतिऽधा । वि । अकल्पयन् ।
मुखम् । किम् । अस्य । किम् । बाहू इति । किम् । ऊरू इति । पादौ । उच्येते इति ॥ ५॥
ब्राह्मणः । अस्य । मुखम् । आसीत् । बाहू इति । राजन्यः । अभवत् ।
मध्यम् । तत् । अस्य । यत् । वैश्यः । पत्ऽभ्याम् । शूद्रः । अजायत ॥ ६ ॥
चन्द्रमाः । मनसः । जातः । चक्षोः । सूर्यः । अजायत ।
मुखात् । इन्द्रः । च । अग्निः । च । प्राणात् । वायुः । अजायत ॥ ७ ॥

**XIX.6.2** With His three quarters, He ascends to the heave; and one of His quarters still remains here. Thus He pervades all that eats as well as that does not eat. (Yv. XXXI.4. Vari.)

**XIX.6.3** That much are His majesty and Puruṣa (cosmic man) is far greater than these. All existing things are only a quarter part of His being; other three quarters are immortal in heaven. (Yv. XXXI.3. Vari.)

**XIX.6.4** All this, that has existed and that is going to exist, is in fact, only Purusa (cosmic man) Himself. Though the Lord of immortality, He has joined company with the other. (Yv.XXXI.2. Vari.)

**XIX.6.5** When they formed Puruṣa (cosmic man), in how many parts did they fashion Him. What was His mouth, what the two arms, what the two thighs; and what were His feet? (Yv. XXXI.10. Vari.)

**XIX.6.6** The Brāhmaṇa (the intellectual) is His mouth; the Kshatriya (Rājanya or the administrators) is His two arms; what is Vaiśya (the producer of wealth), is His middle (part of the body), and the Śūdra (labourer) is born of His feet. (Yv. XXXI.11. Vari.)

**XIX.6.7** The moon is created from His mind and is sun is born from His eye. Electricity and fire from (His) mouth and the wind is born from His vital breath. (Yv. XXXI.12. Vari.)

नाभ्या आसीदुन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ।
पुद्भ्यां भूमिर्दिशुः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥८॥
विराडग्रे समभवद्विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पुश्चाद्भूमिमथो पुरः ॥९॥
यत्पुरुषेण हुविषा देवा युज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यं ग्रीष्म इुध्मः शुरद्धविः ॥१०॥
तं युज्ञं प्रावृषा प्रौक्षन्पुरुषं जातमग्रुशः ।
तेन देवा अयजन्त साध्या वसवश्च ये ॥११॥
तस्मादश्वा अजायन्त ये च के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥१२॥
तस्माद्युज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दो ह जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥१३॥

नाभ्याः । आसीत् । अन्तरिक्षम् । शीर्ष्णः । द्यौः । सम् । अवर्तत ।
पत्ऽभ्याम् । भूमिः । दिशः । श्रोत्रात् । तथा । लोकान् । अकल्पयन् ॥ ८ ॥
विऽराट् । अग्रे । सम् । अभवत् । विऽराजः । अधि । पुरुषः ।
सः । जातः । अति । अरिच्यत । पश्चात् । भूमिम् । अथो इति । पुरः ॥ ९ ॥
यत् । पुरुषेण । हविषा । देवाः । यज्ञम् । अतन्वत ।
वसन्तः । अस्य । आसीत् । आज्यम् । ग्रीष्मः । इध्मः । शरत् । हविः ॥ १० ॥
तम् । यज्ञम् । प्रावृषा । प्र । औक्षन् । पुरुषम् । जातम् । अग्रऽशः ।
तेन । देवाः । अयजन्त । साध्याः । वसवः । च । ये ॥ ११ ॥
तस्मात् । अश्वाः । अजायन्त । ये । च । के । च । उभयादतः ।
गावः । ह । जज्ञिरे । तस्मात् । तस्मात् । जाताः । अजऽअवयः ॥ १२ ॥
तस्मात् । यज्ञात् । सर्वऽहुतः । ऋचः । सामानि । जज्ञिरे ।
छन्दः । ह । जज्ञिरे । तस्मात् । यजुः । तस्मात् । अजायत ॥ १३ ॥

**XIX.6.8** The midspace is created from His navel and the sky from His head; the earth from His feet, various quarters from His ear, and in this way all these worlds are formed. (Yv. XXXI.13)

**XIX.6.9** In the beginning virāj (super-luminescence) comes into existence; from virāj Puruṣa (comes into existence). He exceeds the earth backward and forward both. (Yv. XXXI.5. Vari.)

**XIX.6.10** In the cosmic sacrifice arranged by the bounties of Nature with cosmic man as an oblation, spring is the melted butter, summer the firewood and autumn is the offering. (Yv. XXXI.14)

**XIX.6.11** That earliest-born Puruṣa (cosmic man), the sacrifice, they sprinkled with rain. With Him, the enlightened ones, the perfectibles and the sages performed sacrifice. (Yv. XXXI.9. Vari.)

**XIX.6.12** From that cosmic sacrifice horses are born and all other cattle having two rows of teeth. Cows are born out of it and so are goats and sheep. (Yv. XXXI.8)

**XIX.6.13** From that cosmic sacrifice, in which everything has been offered as oblations, the Rks, and the Sāmans are born. The Chandas of the Atharva, and the Yajuḥ is also born from that sacrifice. (Yv. XXXI.7. Vari.)

तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् ।
पशूँस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥१४॥
सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥१५॥
मूर्ध्नो देवस्य बृहतो अंशवः सप्त सप्ततीः ।
राज्ञः सोमस्याजायन्त जातस्य पुरुषादधि ॥१६॥

तस्मात् । यज्ञात् । सर्वऽहुतः । सम्ऽभृतम् । पृषत्ऽआज्यम् ।
पशून् । तान् । चक्रे । वायव्यान् । आरण्याः । ग्राम्याः । च । ये ॥ १४ ॥

सप्त । अस्य । आसन् । परिऽधयः । त्रिः । सप्त । सम्ऽइधः । कृताः ।
देवाः । यत् । यज्ञम् । तन्वानाः । अबध्नन् । पुरुषम् । पशुम् ॥ १५ ॥

मूर्ध्नः । देवस्य । बृहतः । अंशवः । सप्त । सप्ततीः ।
राज्ञः । सोमस्य । अजायन्त । जातस्य । पुरुषात् । अधि ॥ १६ ॥

( ७ ) सप्तमं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्य गार्ग्य ऋषिः । नक्षत्राणि देवताः । (१-३, ५) प्रथमादितृचस्य पञ्चम्या ऋचश्च त्रिष्टुप्, (४) चतुर्थ्याश्च भुरिक्त्रिष्टुप् छन्दसी ॥

चित्राणि साकं दिवि रोचनानि सरीसृपाणि भुवने जवानि ।
तुर्मिशं सुमतिमिच्छमानो अहानि गीर्भिः सपर्यामि नाकम् ॥१॥
सुहवमग्ने कृत्तिका रोहिणी चास्तु भद्रं मृगशिरः शमार्द्रा ।
पुनर्वसू सूनृता चारु पुष्यो भानुराश्लेषा अयनं मघा मे ॥२॥

चित्राणि । साकम् । दिवि । रोचनानि । सरीसृपाणि । भुवने । जवानि ।
तुर्मिशम् । सुऽमतिम् । इच्छमानः । अहानि । गीःऽभिः । सपर्यामि । नाकम् ॥ १ ॥

सुऽहवम् । अग्ने । कृत्तिकाः । रोहिणी । च । अस्तु । भद्रम् । मृगऽशिरः । शम् । आर्द्रा ।
पुनर्वसू इति पुनःऽवसू । सूनृता । चारु । पुष्यः । भानुः । आऽश्लेषाः । अयनम् । मघाः । मे ॥

**XIX.6.14** From that cosmic sacrifice, in which all things have been offered as oblations, milk and curd (sustaining food) are obtained. Thereon He makes creatures that fly in air, and animals wild and domestic. (Yv. XXXI.6)

**XIX.6.15** Seven are the enclosing pillars and thrice-seven the pieces of fire-wood, when the bounties of Nature tie up the cosmic man as an offering. (Yv. XXXI.15)

**XIX.6.16** From the head of the great, divine and shining moon, born of the Cosmic Man, seven times seventy rays are born.

**To the lunar asterisms : For blessings**

**XIX.7.1** Wondrous (are) the lights, shining together in the sky, gliding with (terrific) speed in the universe. Longing for the harm-repelling wisdom, I praise with songs the asterism moving in the heaven.

**XIX.7.2** O adorable Lord, may the Kṛttikās and Rohiṇī be easy to invoke; may Mṛgaśiras be auspicious, Ārdrā delighting; the two Punarvasus truthful and pleasing; Puṣya beautiful, Aśleṣa glowing, and Māgha leading me forward.

पुण्यं पूर्वा फल्गुन्यौ चात्र हस्तश्चित्रा शिवा स्वाति सुखो मे अस्तु ।
राधे विशाखे सुहवानुराधा ज्येष्ठा सुनक्षत्रमरिष्ट मूलम् ॥३॥
अन्नं पूर्वा रासतां मे अषाढा ऊर्जं देव्युत्तरा आ वहन्तु ।
अभिजिन्मे रासतां पुण्यमेव श्रवणः श्रविष्ठाः कुर्वतां सुपुष्टिम् ॥४॥
आ मे महच्छतभिषग्वरीय आ मे द्वया प्रोष्ठपदा सुशर्म ।
आ रेवती चाश्वयुजौ भगं म आ मे रयिं भरण्य आ वहन्तु ॥५॥

पुण्यम् । पूर्वा । फल्गुन्यौ । च । अत्र । हस्तः । चित्रा । शिवा । स्वाति । सुऽखः । मे । अस्तु । राधे । विऽशाखे । सुऽहवा । अनुऽराधा । ज्येष्ठा । सुऽनक्षत्रम् । अरिष्ट । मूलम् ॥
अन्नम् । पूर्वा । रासताम् । मे । अषाढाः । ऊर्जम् । देवी । उत्ऽतराः । आ । वहन्तु । अभिऽजित् । मे । रासताम् । पुण्यम् । एव । श्रवणः । श्रविष्ठाः । कुर्वताम् । सुऽपुष्टिम् ॥
आ । मे । महत् । शतऽभिषक् । वरीयः । आ । मे । द्वया । प्रोष्ठऽपदा । सुऽशर्म । आ । रेवती । च । अश्वऽयुजौ । भगम् । मे । आ । मे । रयिम् । भरण्यः । आ । वहन्तु ॥ ५ ॥

( ८ ) अष्टमं सूक्तम्

(१-७) सप्तर्चस्यास्य सूक्तस्य गार्ग्य ऋषिः । (१-५, ७) प्रथमादिपञ्चर्चां सप्तम्याश्च नक्षत्राणि, (६) षष्ठ्याश्च ब्रह्मणस्पतिर्देवताः ।
(१) प्रथमाया विराड्जगती, [(२) द्वितीयाया महाबृहती त्रिष्टुप्, (३) तृतीयाया विराट्स्थाना त्रिष्टुप्, (४-६) चतुर्थ्यादितृचस्यानुष्टुप्, (७) सप्तम्याश्च द्विपदा निचृत्त्रिष्टुप्] छन्दांसि ॥

यानि नक्षत्राणि दिव्य१न्तरिक्षे अप्सु भूमौ यानि नगेषु दिक्षु ।
प्रकल्पयंश्चन्द्रमा यान्येति सर्वाणि ममैतानि शिवानि सन्तु ॥१॥
अष्टाविंशानि शिवानि शग्मानि सह योगं भजन्तु मे ।
योगं प्र पद्ये क्षेमं च क्षेमं प्र पद्ये योगं च नमोऽहोरात्राभ्यामस्तु ॥२॥

यानि । नक्षत्राणि । दिवि । अन्तरिक्षे । अप्ऽसु । भूमौ । यानि । नगेषु । दिक्षु । प्रऽकल्पयन् । चन्द्रमाः । यानि । एति । सर्वाणि । मम । एतानि । शिवानि । सन्तु ॥१॥
अष्टाऽविंशानि । शिवानि । शग्मानि । सह । योगम् । भजन्तु । मे । योगम् । प्र । पद्ये । क्षेमम् । च । क्षेमम् । प्र । पद्ये । योगम् । च । नमः । अहोरात्राभ्याम् । अस्तु ॥

**XIX.7.3** May the two Pūrvā Phalgunis be propitious to me; Hasta and Chitrā be auspicious here; may Svāti be joy-giving to me. May the two Rādhās and the two Viśakhās be easy to invoke; may Anurādhā, Jyeṣthā and Mūla be unharming to me.

**XIX.7.4** May Pūrva Aṣadha grant me food; may the divine Uttara (Asadha) bring vigour to me. May Abhijit grant me auspiciousness only; may Śrāvaṇa and Śraviṣṭha provide me with good nourishment.

**XIX.7.5** May Śatabhisak bring great betterment for me; may the two prosṭhapadās (provide) good accommodation; may Revatī and the two Aśvayujs bring bounty and the Bharanis riches for me.

### For well-beeing : To the asterisms etc.

**XIX.8.1** The asterisms, which are there in the sky, in the midspace, in the waters, on the earth, and which are on the mountains and in various quarters of heaven; and to which the moon goes enjoying them, may all those be benign to me.

**XIX.8.2** May the twenty-eight (asterisms), propitious and delightsome, together grant me acquition. May I have acquisition as well as retention; may I have retention as well as acquisition. Homage be to day and night.

स्वस्तितं मे सुप्रातः सुसायं सुदिवं सुमृगं सुशकुनं मे अस्तु ।
सुहवमग्ने स्वस्त्यमर्त्यं गत्वा पुनरायाभिनन्दन् ॥३॥
अनुहवं परिहवं परिवादं परिक्षवम् ।
सर्वैर्मे रिक्तकुम्भान्परा तान्त्सवितः सुव ॥४॥
अपपापं परिक्षवं पुण्यं भक्षीमहि क्षवम् ।
शिवा ते पाप नासिकां पुण्यगश्चाभि मेहताम् ॥५॥
इमा या ब्रह्मणस्पते विषूचीर्वात ईरते ।
सध्रीचीरिन्द्र ताः कृत्वा मह्यं शिवतमास्कृधि ॥६॥
स्वस्ति नो अस्त्वभयं नो अस्तु नमोऽहोरात्राभ्यामस्तु ॥७॥

स्वस्तितम् । मे । सुऽप्रातः । सुऽसायम् । सुऽदिवम् । सुऽमृगम् । सुऽशकुनम् । मे । अस्तु ।
सुऽहवम् । अग्ने । स्वस्ति । अमर्त्यम् । गत्वा । पुनः । आय । अभिऽनन्दन् ॥ ३ ॥
अनुऽहवम् । परिऽहवम् । परिऽवादम् । परिऽक्षवम् ।
सर्वैः । मे । रिक्तऽकुम्भान् । परा । तान् । सवितः । सुव ॥ ४ ॥
अपऽपापम् । परिऽक्षवम् । पुण्यम् । भक्षीमहि । क्षवम् ।
शिवा । ते । पाप । नासिकाम् । पुण्यऽगः । च । अभि । मेहताम् ॥ ५ ॥
इमाः । याः । ब्रह्मणः । पते । विषूचीः । वातः । ईरते ।
सध्रीचीः । इन्द्र । ताः । कृत्वा । मह्यम् । शिवऽतमाः । कृधि ॥ ६ ॥
स्वस्ति । नः । अस्तु । अभयम् । नः । अस्तु । नमः । अहोरात्राभ्याम् । अस्तु ॥ ७ ॥

**XIX.8.3** May the sunset be fine to me, fine the morning, fine the evening, fine the day; good to me be the animals and good the birds. O fire divine, may (our) prayer bring happiness. O immortal, having gone, may you come again rejoicing.

**XIX.8.4** Calling back, crying, abuse, abhorrence, and the empty vessels -- these, O impeller Lord, may you keep away from me by all your devices.

**XIX.8.5** Good food free from sin and free from abhorrence, may we enjoy. And O sin, let him who walks on holy paths, urinate on your nose.

**XIX.8.6** O Lord of knowledge, the winds that blow from these diverse directions, making them to blow in one and right direction, may you make them most propitious for me.

**XIX.8.7** May there be weal for us; may there be freedom from fear for us. Homage be to day and night.

( ९ ) नवमं सूक्तम्

(१-१४) चतुर्दशर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । मन्त्रोक्ता देवताः । (१) प्रथमर्चो विराडुरोबृहती, (२-४, ६-८, १०-११, १३) द्वितीयादितृचस्य षष्ठ्यादितृचस्य दशम्येकादशीत्रयोदशीनाञ्चानुष्टुप्, (५) पञ्चम्याः पञ्चपदा पथ्यापङ्क्तिः, [ (९) नवम्या भुरिक्त्रिष्टुप् ], (१२) द्वादश्यास्त्र्यवसाना सप्तपदाष्टिः, (१४) चतुर्दश्याश्च चतुष्पदा संकृतिश्छन्दांसि ॥

शान्ता द्यौः शान्ता पृथिवी शान्तमिदमुर्व१न्तरिक्षम् ।
शान्ता उदन्वतीरापः शान्ता नः सन्त्वोषधीः ॥१॥
शान्तानि पूर्वरूपाणि शान्तं नो अस्तु कृताकृतम् ।
शान्तं भूतं च भव्यं च सर्वमेव शमस्तु नः ॥२॥
इयं या परमेष्ठिनी वाग्देवी ब्रह्मसंशिता ।
ययैव ससृजे घोरं तयैव शान्तिरस्तु नः ॥३॥
इदं यत्परमेष्ठिनं मनो वां ब्रह्मसंशितम् ।
येनैव ससृजे घोरं तेनैव शान्तिरस्तु नः ॥४॥
इमानि यानि पञ्चेन्द्रियाणि मनःषष्ठानि मे हृदि ब्रह्मणा संशितानि ।
यैरेव ससृजे घोरं तैरेव शान्तिरस्तु नः ॥५॥

शान्ता । द्यौः । शान्ता । पृथिवी । शान्तम् । इदम् । उरु । अन्तरिक्षम् ।
शान्ताः । उदन्वतीः । आपः । शान्ताः । नः । सन्तु । ओषधीः ॥ १ ॥
शान्तानि । पूर्वऽरूपाणि । शान्तम् । नः । अस्तु । कृतऽअकृतम् ।
शान्तम् । भूतम् । च । भव्यम् । च । सर्वम् । एव । शम् । अस्तु । नः ॥ २ ॥
इयम् । या । परमेऽस्थिनी । वाक् । देवी । ब्रह्मऽसंशिता ।
यया । एव । ससृजे । घोरम् । तया । एव । शान्तिः । अस्तु । नः ॥ ३ ॥
इदम् । यत् । परमेऽस्थिनम् । मनः । वाम् । ब्रह्मऽसंशितम् ।
येन । एव । ससृजे । घोरम् । तेन । एव । शान्तिः । अस्तु । नः ॥ ४ ॥
इमानि । यानि । पञ्च । इन्द्रियाणि । मनःऽषष्ठानि मे । हृदि । ब्रह्मणा । समऽशितानि ।
यैः । एव । ससृजे । घोरम् । तैः । एव । शान्तिः । स्तु । नः ॥ ५ ॥

**To Various Divinities : For appeasement and prosperity**

**XIX.9.1** May heaven be peace-giving, earth peace-giving, and peace-giving be this vast midspace; may peace-giving be the waters of the oceans, and peace-giving to us be the herbs.

**XIX.9.2** May the indications of the things approaching be peace-giving; may our commissions and ommissions be peace-giving to us. Peace-giving the past and future; may everything be peace-giving to us.

**XIX.9.3** Sharpened with sacred knowledge, this divine speech, which is seated in the highest place, and with which the terrible (result) is produced, may, with that very same, there be peace for us.

**XIX.9.4** Or, sharpened with sacred knowledge, this mind, which is seated in the highest place, and where with terrible (result) is produced, may, with that very (mind), there be peace for us.

**XIX.9.5** Sharpened with sacred knowledge, these five sense-organs, to which the mind is the sixth and which are in my heart, and wherewith terrible (result) is produced, may, with those very (sense-organs), there be peace for us.

शं नो॑ मि॒त्रः शं वरु॑णः शं विष्णुः॒ शं प्र॒जाप॑तिः ।
शं न॒ इन्द्रो॒ बृह॒स्पति॒ः शं नो॑ भवत्वर्य॒मा ॥६॥
शं नो॑ मि॒त्रः शं वरु॑णः शं वि॒वस्वा॒ञ्छमन्त॑कः ।
उ॒त्पाताः॒ पार्थि॑वान्तरि॑क्षाः शं नो॑ दि॒विच॑रा ग्र॒हाः ॥७॥
शं नो॒ भूमि॑र्वेप्यमा॒ना शमु॒ल्का निर्ह॑तं च॒ यत् ।
शं गावो॒ लोहि॑तक्षीरा॒ः शं भूमि॒रव॑ तीर्य॒तीः ॥८॥
नक्ष॑त्रमु॒ल्काभिह॑तं॒ शम॑स्तु नः॒ शं नो॑ऽभिचा॒राः शमु॑ सन्तु कृ॒त्याः ।
शं नो॒ निखा॑ता व॒ल्गाः शमु॒ल्का दे॑शोपस॒र्गाः शमु॑ नो भवन्तु ॥९॥
शं नो॒ ग्रहा॑श्चान्द्रम॒साः शमा॑दि॒त्यश्च॑ राहु॒णा ।
शं नो॑ मृत्युर्धूमके॑तुः शं रु॒द्रास्ति॒ग्मते॑जसः ॥१०॥
शं रु॒द्राः शं वस॑वः॒ शमा॑दि॒त्याः शम॒ग्नयः॑ ।
शं नो॑ मह॒र्षयो॑ दे॒वाः शं दे॒वाः शं बृह॒स्पति॑ः ॥११॥

शम् । न॒ः । मि॒त्रः । शम् । वरु॑णः । शम् । विष्णु॑ः । शम् । प्र॒जाऽप॑तिः ।
शम् । न॒ः । इन्द्र॑ः । बृह॒स्पति॑ः । शम् । न॒ः । भ॒व॒तु॒ । अ॒र्य॒मा ॥ ६ ॥
शम् । न॒ः । मि॒त्रः । शम् । वरु॑णः । शम् । वि॒वस्वा॑न् । शम् । अन्त॑कः ।
उ॒त्ऽपाता॑ः । पार्थि॑वाः । आ॒न्तरि॑क्षाः । शम् । न॒ः । दि॒विऽच॑राः । ग्र॒हाः ॥ ७ ॥
शम् । न॒ः । भूमि॑ः । वे॒प्य॒मा॒ना । शम् । उ॒ल्का । निः॒ऽह॑तम् । च॒ । यत् ।
शम् । गाव॑ः । लोहि॑तऽक्षीराः । शम् । भूमि॑ः । अव॑ । ती॒र्य॒तीः ॥ ८ ॥
नक्ष॑त्रम् । उ॒ल्का । अ॒भिऽह॑तम् । शम् । अ॒स्तु॒ । न॒ः । शम् । न॒ः । अ॒भि॒ऽचा॒राः । शम् ।
ऊं॒ इति॑ । स॒न्तु॒ । कृ॒त्याः । शम् । न॒ः । निऽखा॑ताः । व॒ल्गाः । शम् । उ॒ल्काः ।
दे॒शो॒प॒ऽस॒र्गाः । शम् । ऊं॒ इति॑ । न॒ः । भ॒व॒न्तु॒ ॥ ९ ॥
शम् । न॒ः । ग्रहा॑ः । चा॒न्द्र॒म॒साः । शम् । आ॒दि॒त्यः । च॒ । रा॒हु॒णा ।
शम् । न॒ः । मृ॒त्युः । धू॒मऽके॑तुः । शम् । रु॒द्राः । ति॒ग्मऽते॑जसः ॥ १० ॥
शम । रु॒द्राः । शम् । वस॑वः । शम् । आ॒दि॒त्याः । शम् । अ॒ग्नयः॑ ।
शम् । न॒ः । म॒ह॒ऽऋ॒षयः॑ । दे॒वाः । शम् । दे॒वाः । शम् । बृ॒ह॒स्पति॑ः ॥ ११ ॥

**XIX.9.6** May the friendly Lord (Mitra) be peace-giving to us; peace-giving the venerable Lord (Varuṇa); peace-giving the pervading Lord; peace-giving the Lord of creatures. May the resplendent Lord and the Lord supreme be peace-giving to us; peace-giving to us be the ordainer Lord.

**XIX.9.7** May the friendly Lord be peace-giving to us; peace-giving be the venerable Lord; peace-giving the brilliant Lord (Vivasvat); peace-giving the ender Lord (Antak). May the disturbances on earth and in the midspace, and the planets moving in the space be peace-giving to us.

**XIX.9.8** May the tremulous earth be gracious to us; gracious the meter that strikes (the earth); gracious be the cows yielding red milk; gracious be the earth cleaving apart.

**XIX.9.9** May the meteor-hit constellation be gracious to us; gracious to us be the malevolent designs (of foes); gracious be the injurious actions (of enemies). May the harmful devices hurled secretly be gracious to us; gracious be the meteors and may the calamities befalling the land may be.

**XIX.9.10** Gracious to us be the eclipser of the moon; and gracious be the sun eclippsed by Rāhu, gracious to us be the fatal comet; gracious be the terrible punisher with fierce valour.

**XIX.9.11** Gracious (be) the terrible punisher, gracious the granter of dwellings, gracious the old sages, gracious the adorable leaders. Gracious to us be the holy great sagẹs, gracious the enlightened ones; and gracious (be) the Lord supreme.

ब्रह्म प्रजापतिर्धाता लोका वेदाः सप्तऋषयोऽग्नयः ।
तैर्मे कृतं स्वस्त्ययनमिन्द्रो मे शर्म यच्छतु ब्रह्मा मे शर्म यच्छतु ।
विश्वे मे देवाः शर्म यच्छन्तु सर्वे मे देवाः शर्म यच्छन्तु ॥१२॥

यानि कानि चिच्छान्तानि लोके सप्तऋषयो विदुः ।
सर्वाणि शं भवन्तु मे शं मे अस्त्वभयं मे अस्तु ॥१३॥

पृथिवी शान्तिरन्तरिक्षं शान्तिर्द्यौः शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः
शान्तिर्विश्वे मे देवाः शान्तिः सर्वे मे देवाः शान्तिः शान्तिः शान्तिः शान्तिभिः ।
ताभिः शान्तिभिः सर्व शान्तिभिः शमयामोऽहं यदिह घोरं यदिह क्रूरं
यदिह पापं तच्छान्तं तच्छिवं सर्वमेव शमस्तु नः ॥१४॥

ब्रह्म । प्रजाऽपतिः । धाता । लोकाः । वेदाः । सप्तऽऋषयः । अग्नयः । तैः । मे । कृतम् ।
स्वस्त्ययनम् । इन्द्रः । मे । शर्म । यच्छतु । ब्रह्मा । मे । शर्म । यच्छतु । विश्वे । मे ।
देवाः । शर्म । यच्छन्तु । सर्वे । मे । देवाः । शर्म । यच्छन्तु ॥ १२ ॥

यानि । कानि । चित् । शान्तानि । लोके । सप्तऽऋषयः । विदुः ।
सर्वाणि । शम् । भवन्तु । मे । शम् । मे । अस्तु । अभयम् । मे । अस्तु ॥ १३ ॥

पृथिवी । शान्तिः । अन्तरिक्षम् । शान्तिः । द्यौः । शान्तिः । आपः । शान्तिः । ओषधयः ।
शान्तिः । वनस्पतयः । शान्तिः । विश्वे । मे । देवाः । शान्तिः । सर्वे । मे । देवाः ।
शान्तिः । शान्तिः । शान्तिः । शान्तिऽभिः । ताभिः । शान्तिऽभिः । सर्वे । शान्तिऽभिः ।
शम् । अयामः । अहम् । यत् । इह । घोरम् । यत् । इह । क्रूरम् । यत् । इह । पापम् ।
तत् । शान्तम् । तत् । शिवम् । सर्वम् । एव । शम् । अस्तु । नः ॥ १४ ॥

### ( १० ) दशमं सूक्तम्

(१-१०) दशर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । मन्त्रोक्ता देवताः । त्रिष्टुप् छन्दः ॥

शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ।
शमिन्द्रासोमा सुविताय शं योः शं न इन्द्रापूषणा वाजसातौ ॥१॥

शम् । नः । इन्द्राग्नी इति । भवताम् । अवःऽभिः । शम् । नः । इन्द्रावरुणा । रातऽहव्या ।
शम् । इन्द्रासोमा । सुविताय । शम् । योः । शम् । नः । इन्द्रापूषणा । वाजऽसातौ ॥ १ ॥

**XIX.9.12** Divine Supreme, the Lord of Creatures, the sustainer, the seven worlds, Vedas (sacred knowledge), the seven seers, the adorable leaders--by them my progress and safety has been secured. May the resplendent Lord grant me happiness; may the Lord of knowledge grant me happiness; may all the enlightened ones grant me happiness; may all the bounties of Nature grant me happiness.

**XIX.9.13** May world's all the peace giving things whatsoever, which the seven-seers know, be peace-giving to me; may there be peace for me; may there be freedom from fear for me.

**XIX.9.14** May the earth (grant) peace, the midspace peace, the sky peace, the waters peace, the herbs peace, forest-trees peace; all the enlightened one (grant) me peace; all the bounties of Nature (grant) me peace. May the peace be real peace with all sorts of peace. With those peaces, with complete peaces, we hereby appease what is dreadful here, what is cruel here. What is sinful here, that has been appeased, that has become blessed. May everything be peace-giving to us.

### For prosperity and well-being

**XIX.10.1** May the sun and fire, with their blessing aids, be for our happiness, may the sun and the ocean, to whom homage is offered, be for our happiness; may the sun and moon be for our happiness and comfort, along with prosperity; may the sun and sustenance be for our happiness in life-struggles. (Rg.VII.35.1)

शं नो भगः शमु नः शंसो अस्तु शं नः पुरंधिः शमु सन्तु रायः ।
शं नः सत्यस्य सुयमस्य शंसः शं नो अर्यमा पुरुजातो अस्तु ॥२॥
शं नो धाता शमु धर्ता नो अस्तु शं न उरूची भवतु स्वधाभिः ।
शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि सन्तु ॥३॥
शं नो अग्निर्ज्योतिरनीको अस्तु शं नो मित्रावरुणावश्विना शम् ।
शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभि वातु वातः ॥४॥
शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु ।
शं न ओषधीर्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः ॥५॥
शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः ।
शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा ग्नाभिरिह शृणोतु ॥६॥
शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः ।
शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्व१ः शम्वस्तु वेदिः ॥७॥

शम् । नः । भगः । शम् । ऊं इति । नः । शंसः । _स्तु । शम् । नः । पुरम्ऽधिः । शम । ऊं इति । सन्तु । रायः । शम् । नः । सत्यस्य । सुऽयमस्य । शंसः । शम् । नः । अर्यमा । पुरुऽजातः । अस्तु ॥ २ ॥

शम् । नः । धाता । शम् । ऊं इति । धर्ता । नः । अस्तु । शम् । नः । उरूची । भवतु । स्वधाभिः । शम् । रोदसी इति । बृहती इति । शम् । नः । अद्रिः । शम् । नः । देवानाम् । सुऽहवानि । सन्तु ॥ ३ ॥

शम् । नः । अग्निः । ज्योतिःऽअनीकः । अस्तु । शम् । नः । मित्रावरुणौ । अश्विना । शम् । शम् । नः । सुऽकृताम् । सुऽकृतानि । सन्तु । शम् । नः । इषिरः । अभि । वातु । वातः ॥ ४ ॥

शम् । नः । द्यावापृथिवी इति । पूर्वऽहूतौ । शम् । अन्तरिक्षम् । दृशये । नः । अस्तु । शम् । नः । ओषधीः । वनिनः । भवन्तु । शम् । नः । रजसः । पतिः । अस्तु । जिष्णुः ॥५॥

शम् । नः । इन्द्रः । वसुऽभिः । देवः । अस्तु । शम् । आदित्येभिः । वरुणः । सुऽशंसः । शम् । नः । रुद्रः । रुद्रेभिः । जलाषः । शम् । नः । त्वष्टा । ग्नाभिः । इह । शृणोतु ॥६॥

शम् । नः । सोमः । भवतु । ब्रह्म । शम् । नः । शम् । नः । ग्रावाणः । शम् । ऊं इति । सन्तु । यज्ञाः । शम् । नः । स्वरूणाम् । मितयः । भवन्तु । शम् । नः । प्रऽस्व१ः । शम् । ऊं इति । अस्तु । वेदिः ॥

**XIX.10.2** May the prosperity be for our happiness; may the discipline be for happiness; may the intellectual pursuits be for our happiness; may the riches be for happiness; may the variously-manifested law and order be for our happiness. (Rg.VII.35.2)

**XIX.10.3** May the people of creativity be for happiness; may the people in charge of sustenance be for our happiness; may the wide earth, with its provisions be for our happiness; may the vast heaven and earth be for happiness; may the mountains be for happiness; may our pious invocations of Nature's bounties secure happiness for us. (Rg.VII.35.3)

**XIX.10.4** May the fire, with the splendour of countenance, be for our happiness; may the cosmic light and plasma, and the pair of twins-divine be for our happiness. May the noble actions of the pious be for our happiness; may the impetuous wind blow for our happiness. (Rg.VII.35.4)

**XIX.10.5** May the heaven and earth, invoked from the earliest times, be for our happiness; may the midspace be for our happiness with charming appearance. May the herbs and the forest trees be for our happiness; may the victorious Lord of the distant regions, be favourable to our felicity. (Rg.VII.35.5)

**XIX.10.6** May the divine sun, with the life-giving elements, grant us happiness; may the justly-praised ethereal ocean with numerous suns, be friendly to our happiness; may the grief-assuaging cosmic vitality, with the vital breaths, bless us for our happiness; may the architect of the universe, with attributes of Nature's bounties, be with us for our happiness, and hear us at this solemnity. (Rg.VII.35.6)

**XIX.10.7** May be the source of our happiness; may the prayers promote our happiness; may the clouds be source of our happiness. May the sacred work and worship be source of our happiness; may the measured lengths of the pillars of ceremonial hall be conducive to our felicity; may the well-grown herbs be for our happiness; may the altar be raised for our happiness. (Rg.VII.35.7)

शं नः सूर्य उरुचक्षा उदेतु शं नो भवन्तु प्रदिशश्चतस्रः ।
शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥८॥
शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः ।
शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्वस्तु वायुः ॥९॥
शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः ।
शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शंभुः ॥१०॥

शम् । नः । सूर्यः । उरुऽचक्षाः । उत् । एतु । शम् । नः । भवन्तु । प्रऽदिशः । चतस्रः । शम् । नः । पर्वताः । ध्रुवयः । भवन्तु । शम् । नः । सिन्धवः । शम् । ऊं इति । सन्तु । आपः ॥ शम् । नः । अदितिः । भवतु । व्रतेभिः । शम् । नः । भवन्तु । मरुतः । सुऽअर्काः । शम् । नः । विष्णुः । शम् । ऊं इति । पूषा । नः । अस्तु । शम् । नः । भवित्रम् । शम् । ऊं इति । अस्तु । वायुः ॥ शम् । नः । देवः । सविता । त्रायमाणः । शम् । नः । भवन्तु । उषसः । विऽभातीः । शम् । नः । पर्जन्यः । भवतु । प्रऽजाभ्यः । शम् । नः । क्षेत्रस्य । पतिः । अस्तु । शम्ऽभुः ॥ १० ॥

### ( ११ ) एकादशं सूक्तम्

(१–६) षड्टचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । मन्त्रोक्ता देवताः । त्रिष्टुप् छन्दः ॥

शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः ।
शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥१॥
शं नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु ।
शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शं नो अप्याः ॥२॥

शम् । नः । सत्यस्य । पतयः । भवन्तु । शम् । नः । अर्वन्तः । शम् । ऊं इति । सन्तु । गावः । शम् । नः । ऋभवः । सुऽकृतः । सुऽहस्ताः । शम् । नः । भवन्तु । पितरः । हवेषु ॥ शम् । नः । देवाः । विश्वऽदेवाः । भवन्तु । शम् । सरस्वती । सह । धीभिः । अस्तु । शम् । अभिऽसाचः । शम् । ऊं इति । रातिऽसाचः । शम् । नः । दिव्याः । पार्थिवाः । शम् । नः । अप्याः ॥ २ ॥

**XIX.10.8** May the sun with extensive radiance rise for our happiness; may the four quarters of the horizon be auspicious to us. May the firm-set mountains bless us for our happiness; may the rivers, may the waters be for our happiness. (Rg.VII.35.8)

**XIX.10.9** May the mother infinity, through holy observances, be for our happiness; may the glowing vital principles be for our happiness; may the all pervading one, the nourishing one, be for our happiness; may the cosmic waters be propitious to us; may the wind blow for our happiness. (Rg.VII.35.9)

**XIX.10.10** May the divine refulgent Lord, the saviour, be for our happiness; may the radiant dawns be propitious to us. May the clouds be propitious for our people; may the sovereign Lord of universe bless us for happiness. (Rg.VII.35.10)

### For well-being

**XIX.11.1** May the sustainers of eternal truths be propitious to our happiness; may the horses, the cattle, contribute to our happiness; may the virtuous, the dexterous men of experience and wisdom, confer felicity on us; may the senior sages be kind to us and respond to our invocations in rituals and ceremonies. (Rg.VII.35.12)

**XIX.11.2** May all the divine Nature's bounties be for our happiness; may the divine speech, with holy thoughts' be gracious; may the persons assisting at our sacred works and those whc liberally and large-heartedly give, be conducive to our happiness; may all celestial, terrestrial, and aquatic powers be for our happiness. (Rg.VII.35.11)

शं नो अज एकपाद्देवो अस्तु शमहिर्बुध्न्यः शं समुद्रः ।
शं नो अपां नपात्पेरुरस्तु शं नः पृश्निर्भवतु देवगोपा ॥३॥
आदित्या रुद्रा वसवो जुषन्तामिदं ब्रह्म क्रियमाणं नवीयः ।
शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः ॥४॥
ये देवानामृत्विजो यज्ञियासो मनोर्यजत्रा अमृता ऋतज्ञाः ।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥५॥
तदस्तु मित्रावरुणा तदग्ने शं योरस्मभ्यमिदमस्तु शस्तम् ।
अशीमहि गाधमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ॥६॥

शम् । नः । अजः । एकऽपात् । देवः । अस्तु । शम् । अहिः । बुध्न्यः । शम् । समुद्रः ।
शम् । नः । अपाम् । नपात् । पेरुः । अस्तु । शम् । नः । पृश्निः । भवतु । देवऽगोपा ॥
आदित्याः । रुद्राः । वसवः । जुषन्ताम् । इदम् । ब्रह्म । क्रियमाणम् । नवीयः ।
शृण्वन्तु । नः । दिव्याः । पार्थिवासः । गोऽजाताः । उत । ये । यज्ञियासः ॥ ४ ॥
ये । देवानाम् । ऋत्विजः । यज्ञियासः । मनोः । यजत्राः । अमृताः । ऋतऽज्ञाः । ते ।
नः । रासन्ताम् । उरुऽगायम् । अद्य । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥
तत् । अस्तु । मित्रावरुणा । तत् । अग्ने । शम् । योः । अस्मभ्यम् । इदम् । अस्तु । शस्तम् ।
अशीमहि । गाधम् । उत । प्रतिऽस्थाम् । नमः । दिवे । बृहते । सदनाय ॥ ६ ॥

( १२ ) द्वादशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । मन्त्रोक्ता देवता । त्रिष्टुप् छन्दः ॥

उषा अप स्वसुस्तमः सं वर्तयति वर्तनिं सुजातता ।
अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥१॥

उषाः । अप । स्वसुः । तमः । सम् । वर्तयति । वर्तनिम् । सुऽजातता ।
अया । वाजम् । देवऽहितम् । सनेम । मदेम । शतऽहिमाः । सुऽवीराः ॥ १ ॥

**XIX.11.3** May the divine unborn Lord, the one-footed (in whose one foot measure is the entire universe) bless us for our happiness; may the clouds of midspace confer happiness; may the cosmic oceans be for happiness; may the heat and electricity, born of water, be gracious, and may the midspace, the sky, guarded by divine powers, be for our happiness. (Rg.VII.35.13)

**XIX.11.4** May the Cosmic suns, the cosmic winds, and the planets of abode be gratified by this new hymn, which we now repeat; may all the divines of celestial and terrestrial worlds, progeny of cows, and those who perform worship, hear our invocations. (Rg.VII.35.14)

**XIX.11.5** May those, who are most adorable among divinely revered, those who have been honoured by all men, those who are immortal, the observers of truth, grant us today widely-spoken reputation, and may you, O Lord, along with the divine forces, ever cherish us with blessings. (Rg.VII.35.15)

**XIX.11.6** May this our praise, O Lord of light and bliss, be appreciated by you. May it, O adorable Lord, be valued by you, as the means of health and happiness to us. May we then obtain depth (of life) and stability. We offer reverence to the vast celestial region. (Rg.V.47.7)

### To Ushās (dawn)

**XIX.12.1** The dawn drives away the gloom of her sister (the night) and through her noble birth illumines the pathway well. Through her, may we win the treasure, beneficial for the enlightened ones; blessed with brave progeny, may we revel through a hundred winters. (Rg.X.172.4; VI.17.15)

( १३ ) त्रयोदशं सूक्तम्

(१–११) एकादशर्चस्यास्य सूक्तस्याप्रतिरथ ऋषिः । इन्द्रो देवता । (१–२, ७–१०) प्रथमाद्वितीययोर्ऋचोः सप्तम्यादिचतसृणाञ्च त्रिष्टुप्, (३–६, ११) तृतीयादिचतसृणामेकादश्याश्च भुरिक्त्रिष्टुप् छन्दसी ॥

**इन्द्र॑स्य बा॒हू स्थवि॑रौ॒ वृषा॑णौ चि॒त्रा इ॒मा वृ॑ष॒भौ पा॑र॒यि॒ष्णू ।**
**तौ यो॑क्षे प्र॒थ॒मो योग॒ आग॑ते॒ याभ्यां॒ जि॒तमसु॑राणां॒ स्व१॒र्यत् ॥१॥**
**आ॒शुः शिशा॑नो वृ॒ष॒भो न भी॒मो घ॑नाघ॒नः क्षोभ॑णश्चर्षणी॒नाम् ।**
**सं॒क्रन्द॑नोनिमि॒ष ए॑कवी॒रः श॒तं सेना॑ अजयत्सा॒कमिन्द्रः॑ ॥२॥**
**सं॒क्रन्द॑नेनानिमि॒षेण॑ जि॒ष्णुना॑यो॒ध्येन॑ दुश्च्यव॒नेन॑ धृ॒ष्णुना॑ ।**
**तदिन्द्रे॑ण जयत॒ तत्स॑हध्वं॒ युधो॑ नर॒ इषु॑हस्तेन॒ वृष्णा॑ ॥३॥**
**स इषु॑हस्तैः॒ स नि॒ष॒ङ्गिभि॑र्व॒शी संस्र॑ष्टा॒ स यु॒ध इन्द्रो॑ ग॒णेन॑ ।**
**सं॒सृ॒ष्ट॒जित्सो॑म॒पा बा॑हुश॒र्ध्यु१॒ग्रध॑न्वा॒ प्रति॑हिताभि॒रस्ता॑ ॥४॥**
**ब॒ल॒वि॒ज्ञा॒यः स्थवि॑रः॒ प्रवी॑रः॒ सह॑स्वान्वा॒जी सह॑मान उ॒ग्रः ।**
**अ॒भिवी॑रो अ॒भिष॑त्वा सहो॒जिज्जैत्र॑मिन्द्र॒ रथ॒मा ति॑ष्ठ गो॒विद॑न् ॥५॥**
**इ॒मं वी॒रमनु॑ हर्षध्वमु॒ग्रमिन्द्रं॑ सखायो॒ अनु॒ सं र॑भध्वम् ।**
**ग्रा॒म॒जितं॑ गो॒जितं॒ वज्र॑बाहुं॒ जय॑न्त॒मज्म॑ प्रमृ॒णन्त॒मोज॑सा ॥६॥**

इन्द्र॑स्य । बा॒हू इति॑ । स्थवि॑रौ । वृषा॑णौ । चि॒त्रा । इ॒मा । वृ॒ष॒भौ । पा॒र॒यि॒ष्णू इति॑ ।
तौ । यो॒क्षे॒ । प्र॒थ॒मः । योगे॑ । आऽग॑ते । याभ्या॑म् । जि॒तम् । असु॑राणाम् । स्व१ः । यत् ॥
आ॒शुः । शिशा॑नः । वृ॒ष॒भः । न । भी॒मः । घ॒ना॒घ॒नः । क्षोभ॑णः । च॒र्ष॒णी॒नाम् ।
स॒म्ऽक्रन्द॑नः । अ॒नि॒ऽमि॒षः । ए॒क॒ऽवी॒रः । श॒तम् । सेनाः॑ । अ॒ज॒य॒त् । सा॒कम् । इन्द्रः॑ ॥ २ ॥
स॒म्ऽक्रन्द॑नेन । अ॒नि॒ऽमि॒षेण॑ । जि॒ष्णुना॑ । अ॒यो॒ध्येन॑ । दुः॒ऽच्य॒व॒नेन॑ । धृ॒ष्णुना॑ ।
तत् । इन्द्रे॑ण । ज॒य॒त॒ । तत् । स॒ह॒ध्व॒म् । यु॒धः॒ । न॒रः॒ । इषु॑ऽहस्तेन । वृष्णा॑ ॥ ३ ॥
सः । इषु॑ऽहस्तैः । सः । नि॒ष॒ङ्गिऽभिः॑ । व॒शी । सम्ऽस्र॑ष्टा । सः । युधः॑ । इन्द्रः॑ । ग॒णेन॑ ।
सं॒सृ॒ष्ट॒ऽजित् । सो॒म॒ऽपाः । बा॒हु॒ऽश॒र्धी । उ॒ग्रऽध॑न्वा । प्रति॑ऽहिताभिः । अस्ता॑ ॥ ४ ॥
ब॒ल॒ऽवि॒ज्ञा॒यः । स्थवि॑रः । प्रऽवी॑रः । सह॑स्वान् । वा॒जी । सह॑मानः । उ॒ग्रः ।
अ॒भिऽवी॑रः । अ॒भिऽस॑त्वा । स॒हः॒ऽजित् । जैत्र॑म् । इ॒न्द्र॒ । रथ॑म् । आ । ति॒ष्ठ॒ । गो॒ऽवि॒द॑म् ॥
इ॒मम् । वी॒रम् । अनु॑ । ह॒र्ष॒ध्व॒म् । उ॒ग्रम् । इन्द्र॑म् । स॒खा॒यः॒ । अनु॑ । सम् । र॒भ॒ध्व॒म् ।
ग्रा॒म॒ऽजित॑म् । गो॒ऽजित॑म् । वज्र॑ऽबाहुम् । जय॑न्तम् । अज्म॑ । प्र॒ऽमृ॒णन्त॑म् । ओज॑सा ॥ ६ ॥

**For aid and victory in battles.**

**XIX.13.1** The two of the resplendent Lord are two sturdy, mighty, wonderful bulls, capable of carrying us across the difficulties; when the need arises, first of all I shall yoke them, by whom the heaven of the life-destroyers was conquered.

**XIX.13.2** Quick, striking with sharpened bolt, terrible like a bull, destroyer of enemies on a large scale, arouser of people, making the sinful persons cry, never negligent, the unique here, the resplendent one (the army-chief) conquers a hundred invading armies at a time. (Yv. XVII.33)

**XIX.13.3** With him, the army-chief, who makes the enemies weep, who is ever-watchful;, victorious, spoiling for battle, unconquerable, fearless and strong, and who bears arrows in his hand, O soldiers, may you gain victories and win battles. (Yv. XVII.34)

**XIX.13.4** That army-chief, commanding the soldiers who carry arrows and quivers, organizes them into battalions and with them he captures enemies. He, the enjoyer of the herbal drinks, depending on the strength of his arms only, carrying a mighty bow, scatters the hosts of united enemies with his well-shot arrows. (Yv. XVII.35)

**XIX.13.5** O resplendent one (army-chief), having full information of the opposing army, senior-most, valiant, full of strength, agile, overwhelming the foes, formidable, ready to engage every warrior, surrounded by servants, born out of strength as if, appreciator of praises, may you mount your conquering chariot now. (Yv. XVII.37)

**XIX.13.6** Be thrilled with joy following this formidable hero, O friends; make determined effort following him, the conqueror of troops, winner of cows, thunder-armed, victor in battles and slaughtering with tremendous force.

अभि गोत्राणि सहसा गाहमानोदाय उग्रः शतमन्युरिन्द्रः ।
दुश्च्यवनः पृतनाषाडयोध्यो३स्माकं सेना अवतु प्र युत्सु ॥७॥
बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः ।
प्रभञ्जञ्छत्रून्प्रमृणन्नमित्रानस्माकमेध्यविता तनूनाम् ॥८॥
इन्द्र एषां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्तु मध्ये ॥९॥
इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम् ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥१०॥
अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ।
अस्माकं वीरा उत्तरे भवन्त्वस्मान्देवासोवता हवेषु ॥११॥

अभि । गोत्राणि । सहसा । गाहमानः । अदायः । उग्रः । शतऽमन्युः । इन्द्रः ।
दुःऽच्यवनः । पृतनाषाट् । अयोध्यः । अस्माकम् । सेनाः । अवतु । प्र । युत्ऽसु ॥ ७ ॥
बृहस्पते । परि । दीय । रथेन । रक्षःऽहा । अमित्रान् । अपऽबाधमानः ।
प्रऽभञ्जन् । शत्रून् । प्रऽमृणन् । अमित्रान् । अस्माकम् । एधि । अविता । तनूनाम् ॥ ८ ॥
इन्द्रः । एषाम् । नेता । बृहस्पतिः । दक्षिणा । यज्ञः । पुरः । एतु । सोमः ।
देवऽसेनानाम् । अभिऽभञ्जतीनाम् । जयन्तीनाम् । मरुतः । यन्तु । मध्ये ॥ ९ ॥
इन्द्रस्य । वृष्णः । वरुणस्य । राज्ञः । आदित्यानाम् । मरुताम् । शर्धः । उग्रम् ।
महाऽमनसाम् । भुवनऽच्यवानाम् । घोषः । देवानाम् । जयताम् । उत् । अस्थात् ॥१०॥
अस्माकम् । इन्द्रः । समऽऋतेषु । ध्वजेषु । अस्माकम् । याः । इषवः । ताः । जयन्तु ।
अस्माकम् । वीराः । उत्ऽतरे । भवन्तु । अस्मान् । देवासः । अवत । हवेषु ॥ ११ ॥

( १४ ) चतुर्दशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । द्यावापृथिव्यौ देवते । त्रिष्टुप् छन्दः ॥

इदमुच्छ्रेयोवसानमागां शिवे मे द्यावापृथिवी अभूताम् ।
असपत्नाः प्रदिशो मे भवन्तु न वै त्वा द्विष्मो अभयं नो अस्तु ॥१॥

इदम् । उत्ऽश्रेयः । अवऽसानम् । आ । अगाम् । शिवे इति । मे । द्यावापृथिवी इति ।
अभूताम् । असपत्नाः । प्रऽदिशः । मे । भवन्तु । न । वै । त्वा । द्विष्मः । अभयम् । नः । अस्तु ॥

**XIX.13.7** May the resplendent one (army-chief), crushing the enemy clans with tremendous force, pitiless, valiant, quick to take offence, difficult to dislodge, vanquisher of armies, the matchless her, protect our armies in battles. (Yv. XVII.39)

**XIX.13.8** O Lord of the large army, slayer of evil forces, harassing the enemies, may you go around far and wide with your chariot. Routing the opponent armies and conquering the violent foes in battles, may you become protector of our chariots. (Yv. XVII.36)

**XIX.13.9** Let the resplendent one, the Commander of the large army, be their leader; let the self-sacrificing squad be on their right; let the units intoxicated with herbal drinks move to the fore. Let the brave infantry march in the forefront of the conquering and overwhelming armies of godly people. (Yv. XVII.40 Variation)

**XIX.13.10** Fierce strength of the powerful army-chief of the venerable kind, and of the infantry, glittering like (many) suns, has come up. And up goes the shout of the winning godly people, big-hearted and capable of overturning the worlds. (Yv. XVII.41)

**XIX.13.11** When the flags assemble in the battle-field, may our army-chief win; may those shafts win that are ours. may our warriors have an edge over the enemy; may the bounties of Nature protect us in the battles. (Yv. XVII.43)

## For safety

**XIX.14.1** I have reached this highly excellent end (of the journey). Heaven and earth have been auspicious to me. May the great quarters be free rivals for me. Surely, we do not hate you. Let there be no fear for us. (Ṛv. VIII.61.13 Variation)

## ( १५ ) पञ्चदशं सूक्तम्

(१-६) षडृचस्यास्य सूक्तस्याथर्वा ऋषिः । (१-४) प्रथमादिचतसृणामृचामिन्द्रः, (५-६) पञ्चमीषष्ठयोश्च मन्त्रोक्ता देवताः । (१) प्रथमायाः पथ्याबृहती, (२, ५) द्वितीयापञ्चम्योश्चतुष्पदा जगती, (३) तृतीयाया विराड्बृहत्यापङ्क्तिः, (४, ६) चतुर्थीषष्ठयोश्च त्रिष्टुप् छन्दांसि ॥

यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव त्वं न ऊतिभिर्वि द्विषो वि मृधो जहि ॥१॥
इन्द्रं वयमनूराधं हवामहेनु राध्यास्म द्विपदा चतुष्पदा ।
मा नः सेना अररुषीरुप गुर्विषूचीरिन्द्र द्रुहो वि नाशय ॥२॥
इन्द्रस्त्रातोत वृत्रहा परस्फानो वरेण्यः ।
स रक्षिता चरमतः स मध्यतः स पश्चात्स पुरस्तान्नो अस्तु ॥३॥
उरुं नो लोकमनु नेषि विद्वान्त्स्वर्यज्ज्योतिरभयं स्वस्ति ।
उग्रा त इन्द्र स्थविरस्य बाहू उप क्षयेम शरणा बृहन्ता ॥४॥
अभयं नः करत्यन्तरिक्षमभयं द्यावापृथिवी उभे इमे ।
अभयं पश्चादभयं पुरस्तादुत्तरादधरादभयं नो अस्तु ॥५॥
अभयं मित्रादभयममित्रादभयं ज्ञातादभयं पुरो यः ।
अभयं नक्तमभयं दिवा नः सर्वा आशा मम मित्रं भवन्तु ॥६॥

यतः । इन्द्र । भयामहे । ततः । नः । अभयम् । कृधि ।
मघऽवन् । शग्धि । तव । त्वम् । नः । ऊतिऽभिः । वि । द्विषः । वि । मृधः । जहि ॥
इन्द्रम् । वयम् । अनुऽराधम् । हवामहे । अनु । राध्यास्म । द्विऽपदा । चतुःऽपदा ।
मा । नः । सेनाः । अररुषीः । उप । गुः । विषूचीः । इन्द्र । द्रुहः । वि । नाशय ॥ २ ॥
इन्द्रः । त्राता । उत । वृत्रऽहा । परस्फानः । वरेण्यः ।
सः । रक्षिता । चरमतः । सः । मध्यतः । सः । पश्चात् । सः । पुरस्तात् । नः । अस्तु ॥ ३ ॥
उरुम् । नः । लोकम् । अनु । नेषि । विद्वान् । स्वः । यत् । ज्योतिः । अभयम् । स्वस्ति ।
उग्रा । ते । इन्द्र । स्थविरस्य । बाहू इति । उप । क्षयेम । शरणा । बृहन्ता ॥ ४ ॥
अभयम । नः । करति । अन्तरिक्षम् । अभयम् । द्यावापृथिवी इति । उभे इति । इमे इति ।
अभयम् । पश्चात् । अभयम् । पुरस्तात् । उत्ऽतरात् । अधरात् । अभयम् । नः । अस्तु ॥५॥
अभयम् । मित्रात । अभयम । अमित्रात् । अभयम् । ज्ञातात् । अभयम् । पुरः । यः ।
अभयम् । नक्तम् । अभयम् । दिवा । नः । सर्वाः । आशाः । मम । मित्रम । भवन्तु ॥ ६ ॥

## For safety and success

**XIX.15.1** Wherefrom, O resplendent Lord, we apprehend danger, therefrom may you make us safe and secure. O bounteous Lord, you are capable of it with your protective aids. May you destroy completely our haters and harmers.

**XIX.15.2** We invoke the resplendent Lord, the granter of success. May we obtain success through bipeds and quadrupeds. Let not the armies of cruel foes approach us. O resplendent Lord, may you destroy vast hordes of enemies.

**XIX.15.3** The resplendent Lord is the saviour as well as the destroyer of nescience; He is the defender against enemies and is the best to choose. May He be our protector at the extreme ends, He in the middle, He from the front and He from behind.

**XIX.15.4** Knowing well, may you lead us to the spacious region, where there is heavenly light, freedom, fear and weal. May we take shelter, O resplendent Lord, mighty in battle, under your formidable arms, the great refuges. (Ṛg.VI.47.8. Variation)

**XIX.15.5** May the midspace make us free from fear; free from fear, may both these heaven and earth be (for us). May there be no fear to us from behind, from the front, from above as well as from below.

**XIX.15.6** May there be no fear from a friend;no fear from a foe; no fear from one known to us; no fear from the unknown one. May there be no fear at night, no fear in the day for us. May all the regions be friendly to me.

( १६ ) षोडशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वा ऋषिः। मन्त्रोक्ता देवताः। (१) प्रथमर्चोऽनुष्टुप्, (२) द्वितीयायाश्च त्र्यवसाना सप्तपदा बृहतीगर्भातिशक्वरी छन्दसी ॥

असपत्नं पुरस्तात्पश्चान्नो अभयं कृतम् ।
सविता मा दक्षिणत उत्तरान्मा शचीपतिः ॥१॥
दिवो मादित्या रक्षन्तु भूम्या रक्षन्त्वग्नयः ।
इन्द्राग्नी रक्षतां मा पुरस्तादश्विनावभितः शर्म यच्छताम् ।
तिरश्चीनघ्न्या रक्षतु जातवेदा भूतकृतो मे सर्वतः सन्तु वर्म ॥२॥

असपत्नम् । पुरस्तात् । पश्चात् । नः । अभयम् । कृतम् ।
सविता । मा । दक्षिणतः । उत्तरात् । मा । शचीऽपतिः ॥ १ ॥

दिवः । मा । आदित्याः । रक्षन्तु । भूम्याः । रक्षन्तु । अग्नयः ।
इन्द्राग्नी इति । रक्षताम् । मा । पुरस्तात् । अश्विनौ । अभितः । शर्म । यच्छताम् ।
तिरश्चीन् । अघ्न्या । रक्षतु । जातऽवेदाः । भूतऽकृतः । मे । सर्वतः । सन्तु । वर्म ॥ २ ॥

( १७ ) सप्तदशं सूक्तम्

(१-१०) दशर्चस्यास्य सूक्तस्याथर्वा ऋषिः। मन्त्रोक्ता देवताः। [ (१) प्रथमर्च उपजगती ], (२-४) द्वितीयादितृचस्य [ (८) अष्टम्याश्च ] जगती, [ (५) पञ्चम्याः स्वराड्जगती ], (६) षष्ठ्या भुरिग्जगती, (७) सप्तम्या अतिजगती, [ (९) नवम्याः पञ्चपदा विराडतिशक्वरी, (१०) दशम्याश्च निचृदतिजगती ] छन्दांसि ॥

अग्निर्मा पातु वसुभिः पुरस्तात्तस्मिन्क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥१॥
वायुर्मान्तरिक्षेणैतस्या दिशः पातु तस्मिन्क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥२॥

अग्निः । मा । पातु । वसुऽभिः । पुरस्तात् । तस्मिन् । क्रमे । तस्मिन् । श्रये । ताम् । पुरम् । प्र । एमि । सः । मा । रक्षतु । सः । मा । गोपायतु । तस्मै । आत्मानम् । परि । ददे । स्वाहा ॥१॥

वायुः । मा । अन्तरिक्षेण । एतस्याः । दिशः । पातु । तस्मिन् । क्रमे । तस्मिन् । श्रये । ताम् । पुरम् । प्र । एमि । सः । मा । रक्षतु । सः । मा । गोपायतु । तस्मै । आत्मानम् । परि । ददे । स्वाहा ॥ २ ॥

## To divinities for safety and protection

**XIX.16.1** Freedom from rivals in the east and freedom from fear in the west has been secured for us. May the impeller Lord guard me from the south and the Lord of action from the north.

**XIX.16.2** May the suns (of the twelve months) protect me from the sky; may the fires protect (me) from earth. May Lord resplendent and adorable protect me in front and the aśvins (twins divine) grant me protection on all sides. May the Lord cognizant of all protect our cows crosswise. May the creators of all beings be my armour on all sides.

## To Various Gods for protection

**XIX.17.1** May the adorable Lord (Agni) along with the Vasus (young sages) guard me from the east. I step in Him; in Him I take shelter; to that castle do I go. May He defend me; may He protect me. To Him I totally surrender myself. Svāhā (hail).

**XIX.17.2** May the pervading Lord (Vāyu), along with the midspace, guard me from this direction (middle of the east and the south). I step in Him; in Him I take shelter; to that castle do I go. May He defend me; may He protect me. To Him I totally surrender myself. Svāhā.

सोमो मा रुद्रैर्दक्षिणाया दिशः पातु तस्मिन्क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥३॥
वरुणो मादित्यैरेतस्या दिशः पातु तस्मिन्क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥४॥
सूर्यो मा द्यावापृथिवीभ्यां प्रतीच्या दिशः पातु तस्मिन्क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥५॥
आपो मौषधीमतीरेतस्या दिशः पान्तु तासु क्रमे तासु श्रये तां पुरं प्रैमि ।
ता मा रक्षन्तु ता मा गोपायन्तु ताभ्य आत्मानं परि ददे स्वाहा ॥६॥
विश्वकर्मा मा सप्तऋषिभिरुदीच्या दिशः पातु तस्मिन्क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥७॥

सोमः । मा । रुद्रैः । दक्षिणायाः । दिशः । पातु । तस्मिन् । क्रमे । तस्मिन् । श्रये । ताम् । पुरम् । प्र । एमि । सः । मा । रक्षतु । सः । मा । गोपायतु । तस्मै । आत्मानम् । परि । ददे । स्वाहा ॥ ३ ॥

वरुणः । मा । आदित्यैः । एतस्याः । दिशः । पातु । तस्मिन् । क्रमे । तस्मिन् । श्रये । ताम् । पुरम् । प्र । एमि । सः । मा । रक्षतु । सः । मा । गोपायतु । तस्मै । आत्मानम् । परि । ददे । स्वाहा ॥ ४ ॥

सूर्यः । मा । द्यावापृथिवीभ्याम् । प्रतीच्याः । दिशः । पातु । तस्मिन् । क्रमे । तस्मिन् । श्रये । ताम् । पुरम् । प्र । एमि । सः । मा । रक्षतु । सः । मा । गोपायतु । तस्मै । आत्मानम् । परि । ददे । स्वाहा ॥ ५ ॥

आपः । मा । ओषधीऽमतीः । एतस्याः । दिशः । पान्तु । तासु । क्रमे । तासु । श्रये । ताम् । पुरम् । प्र । एमि । ताः । मा । रक्षन्तु । ताः । मा । गोपायन्तु । ताभ्यः । आत्मानम् । परि । ददे । स्वाहा ॥ ६ ॥

विश्वऽकर्मा । मा । सप्तऋषिऽभिः । उदीच्याः । दिशः । पातु । तस्मिन् । क्रमे । तस्मिन् । श्रये । ताम् । पुरम् । प्र । एमि । सः । मा । रक्षतु । सः । मा । गोपायतु । तस्मै । आत्मानम् । परि । ददे । स्वाहा ॥ ७ ॥

**XIX.17.3** May the blissful Lord (Soma), along with Rudras (adult sages), guard me from the southern quarter. I step in Him; in Him I take shelter; to that castle do I go. May He defend me; may He protect me. To Him I totally surrender myself. Svāhā.

**XIX.17.4** May the venerable Lord (Varuna), along with Ādityas (old sages), guard me from this direction (middle of the south and the west). I step in Him; in Him I take shelter; to that castle do I go. May He defend me; may He protect me. To Him I totally surrender myself. Svāhā.

**XIX.17.5** May Sun (god), along with the heaven and earth, guard me from the western quarter. I step in Him; in Him I take shelter; to that castle do I go. May He defend me; may He protect me. To Him I totally surrender myself. Svāhā.

**XIX.17.6** May Waters, along with the medicinal plants, guard me from this direction (middle of the west and the north). I step in Him; in Him I take shelter; to that castle do I go. May He defend me; may He protect me. To Him I totally surrender myself. Svāhā.

**XIX.17.7** May the universal Architect, along with the seven seers, guard me from the northern quarter. I step in Him; in Him I take shelter; to that castle do I go. May He defend me; may He protect me. To Him I totally surrender myself. Svāhā.

इन्द्रो मा मुरुत्वानेतस्या दिशः पातु तस्मिन्क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥८॥
प्रजापतिर्मा प्रजननवान्त्सह प्रतिष्ठाया ध्रुवाया दिशः पातु तस्मिन्क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥९॥
बृहस्पतिर्मा विश्वैर्देवैरूर्ध्वाया दिशः पातु तस्मिन्क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥१०॥

इन्द्रः । मा । मरुत्ऽवान् । एतस्याः । दिशः । पातु । तस्मिन् । क्रमे । तस्मिन् । श्रये । ताम् । पुरम् । प्र । एमि । सः । मा । रक्षतु । सः । मा । गोपायतु । तस्मै । आत्मानम् । परि । ददे । स्वाहा ॥ ८ ॥

प्रजाऽपतिः । मा । प्रजननऽवान् । सह । प्रतिऽस्थया । ध्रुवायाः । दिशः । पातु । तस्मिन् । क्रमे । तस्मिन् । श्रये । ताम् । पुरम् । प्र । एमि । सः । मा । रक्षतु । सः । मा । गोपायतु । तस्मै । आत्मानम् । परि । ददे । स्वाहा ॥ ९ ॥

बृहस्पतिः । मा । विश्वैः । देवैः । ऊर्ध्वायाः । दिशः । पातु । तस्मिन् । क्रमे । तस्मिन् । श्रये । ताम् । पुरम् । प्र । एमि । सः । मा । रक्षतु । सः । मा । गोपायतु । तस्मै । आत्मानम् । परि । ददे । स्वाहा ॥ १० ॥

## ( १८ ) अष्टादशं सूक्तम्

(१-१०) दशर्चस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवताः । (१, ८) प्रथमाष्टम्योर्ऋचोः साम्नी त्रिष्टुप्, (२-४, ६) द्वितीयादितृचस्य षष्ठ्याश्चार्च्यनुष्टुप्, (५) पञ्चम्याः [स्वराट्] आर्च्यनुष्टुप्, (७, ९, १०) सप्तमीनवमीदशमीनाञ्च प्राजापत्या त्रिष्टुप् छन्दांसि । सर्वा द्विपदाः ॥

अग्निं ते वसुवन्तमृच्छन्तु । ये माघायवः प्राच्या दिशोऽभिदासात् ॥१॥
वायुं तेऽन्तरिक्षवन्तमृच्छन्तु । ये माघायव एतस्या दिशोऽभिदासात् ॥२॥
सोमं ते रुद्रवन्तमृच्छन्तु । ये माघायवो दक्षिणाया दिशोऽभिदासात् ॥३॥

अग्निम् । ते । वसुऽवन्तम् । ऋच्छन्तु । ये । मा । अघऽयवः । प्राच्याः । दिशः । अभिऽदासान् ॥

वायुम् । ते । अन्तरिक्षऽवन्तम् । ऋच्छन्तु । ये । मा । अघऽयवः । एतस्याः । दिशः । अभिऽदासान ॥ २ ॥

सोमम् । ते । रुद्रऽवन्तम् । ऋच्छन्तु । ये । मा । अघऽयवः । दक्षिणायाः । दिशः । अभिऽदासान् ॥ ३ ॥

**XIX.17.8** May the resplendent Lord, along with Maruts (cloud-bearing winds) guard me from this direction (middle of the north and the east). I step in Him; in Him I take shelter; to that castle do I go. May He defend me; may He protect me. To Him I totally surrender myself. Svāhā.

**XIX.17.9** May the Lord of creatures (Prajāpati), along with virility and respectability, guard me from the fixed quarter (i.e., nadir). I step in Him; in Him I take shelter; to that castle do I go. May He defend me; may He protect me. To Him I totally surrender myself. Svāhā.

**XIX.17.10** May the Lord supreme (Bṛhaspati) along with all the bounties of Nature, guard me from the upward quarter (i.e., zenith). I step in Him; in Him I take shelter; to that castle do I go. May He defend me; may He protect me. To Him I totally surrender myself. Svāhā.

**For protection : To various God.**

**XIX.18.1** To the adorable Lord with the Vasus, may they go (for their destruction), who, of sinful intent, invade me from the eastern quarter.

**XIX.18.2** To the pervading Lord with the midspace, may they go (for their destruction), who, of sinful intent invade me from this direction (middle of the south).

**XIX.18.3** To the blissful Lord with the Rudras, may they go (for their destruction), who, of sinful intent, invade me from the southern quarter.

वरुणं त आदित्यवन्तमृच्छन्तु । ये माघायव एतस्या दिशोऽभिदासात् ॥४॥
सूर्यं ते द्यावापृथिवीवन्तमृच्छन्तु । ये माघायवः प्रतीच्या दिशोऽभिदासात् ॥५॥
अपस्त ओषधीमतीर्ऋच्छन्तु । ये माघायव एतस्या दिशोऽभिदासात् ॥६॥
विश्वकर्माणं ते सप्तऋषिवन्तमृच्छन्तु । ये माघायव उदीच्या दिशोऽभिदासात् ॥७॥
इन्द्रं ते मरुत्वन्तमृच्छन्तु । ये माघायव एतस्या दिशोऽभिदासात् ॥८॥
प्रजापतिं ते प्रजननवन्तमृच्छन्तु । ये माघायवो ध्रुवाया दिशोऽभिदासात् ॥९॥
बृहस्पतिं ते विश्वदेववन्तमृच्छन्तु । ये माघायव ऊर्ध्वाया दिशोऽभिदासात् ॥१०॥

वरुणम् । ते । आदित्यऽवन्तम् । ऋच्छन्तु । ये । मा । अघऽयवः । एतस्याः । दिशः । अभिऽदासात् ॥ ४ ॥

सूर्यम् । ते । द्यावापृथिवीऽवन्तम् । ऋच्छन्तु । ये । मा । अघऽयवः । प्रतीच्याः । दिशः । अभिऽदासात् ॥ ५ ॥

अपः । ते । ओषधीऽमतीः । ऋच्छन्तु । ये । मा । अघऽयवः । एतस्याः । दिशः । अभिऽदासात् ॥ ६ ॥

विश्वऽकर्माणम् । ते । सप्तऋषिऽवन्तम् । ऋच्छन्तु ।
ये । मा । अघऽयवः । उदीच्याः । दिशः । अभिऽदासात् ॥ ७ ॥

इन्द्रम् । ते । मरुत्ऽवन्तम् । ऋच्छन्तु । ये । मा । अघऽयवः । एतस्याः । दिशः । अभिऽदासात् ॥ ८ ॥

प्रजाऽपतिम् । ते । प्रजननऽवन्तम् । ऋच्छन्तु । ये । मा । अघऽयवः । ध्रुवायाः । दिशः । अभिऽदासात् ॥ ९ ॥

बृहस्पतिम् । ते । विश्वदेवऽवन्तम् । ऋच्छन्तु । ये । मा । अघऽयवः । ऊर्ध्वायाः । दिशः । अभिऽदासात् ॥ १० ॥

**XIX.18.4** To the venerable Lord with the suns (of twelve months), may they go (for their destruction), who of sinful intent, invade me from this direction (middle of the south and the west).

**XIX.18.5** To the Sun (God) with the heaven and earth, may they go (for their destruction), who of sinful intent, invade me from the western quarter.

**XIX.18.6** To the Waters with the medicinal plants, may they go (for their destruction), who, of sinful intent, invade me from this direction (middle of the west and the north).

**XIX.18.7** To the universal Architect with the seven-seers, may they go (for their destruction), who, of sinful intent, invade me from the northern quarter.

**XIX.18.8** To the resplendent Lord with Maruts (the cloud-bearing winds), may they go (for their destruction), who of sinful intent invade me from this direction (middle of the north and the east).

**XIX.18.9** To the Lord of creatures with virility, may they go (for their destruction), who, of sinful intent, invade me from the fixed quarter (nadir).

**XIX.18.10** To the Lord supreme with all the bounties of Nature,may they go (for their destruction), who, of sinful intent, invade me from the upward quarter (zenith).

### ( १९ ) एकोनविंशं सूक्तम्

(१-११) एकादशर्चस्यास्य सूक्तस्याथर्वा ऋषिः। चन्द्रमा मन्त्रोक्ताश्च देवताः। (१, ३, ९) प्रथमातृतीया-नवमीनामृचां भुरिग्बृहती, (२, ४-८, ११) द्वितीयायाश्चतुर्थ्यादिपञ्चानामेकादश्याश्चानुष्टुब्गर्भा पङ्क्तिः, (१०) दशम्याश्च स्वराट् पङ्क्तिश्छन्दांसि ॥

मित्रः पृथिव्योदक्रामत्तां पुरं प्र णयामि वः ।
तामा विशत तां प्र विशत सा वः शर्म च वर्म च यच्छतु ॥१॥
वायुरन्तरिक्षेणोदक्रामत्तां पुरं प्र णयामि वः ।
तामा विशत तां प्र विशत सा वः शर्म च वर्म च यच्छतु ॥२॥
सूर्यो दिवोदक्रामत्तां पुरं प्र णयामि वः ।
तामा विशत तां प्र विशत सा वः शर्म च वर्म च यच्छतु ॥३॥
चन्द्रमा नक्षत्रैरुदक्रामत्तां पुरं प्र णयामि वः ।
तामा विशत तां प्र विशत सा वः शर्म च वर्म च यच्छतु ॥४॥
सोम ओषधीभिरुदक्रामत्तां पुरं प्र णयामि वः ।
तामा विशत तां प्र विशत सा वः शर्म च वर्म च यच्छतु ॥५॥
यज्ञो दक्षिणाभिरुदक्रामत्तां पुरं प्र णयामि वः ।
तामा विशत तां प्र विशत सा वः शर्म च वर्म च यच्छतु ॥६॥

मित्रः । पृथिव्या । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ । विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ १ ॥

वायुः । अन्तरिक्षेण । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ । विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ २॥

सूर्यः । दिवा । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ । विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ३ ॥

चन्द्रमाः । नक्षत्रैः । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ । विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ४ ॥

सोमः । ओषधीभिः । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ । विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ५ ॥

यज्ञः । दक्षिणाभिः । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ । विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ६ ॥

## For protection : To Various Gods

**XIX.19.1** The fire rose up with the earth; I lead you forward to that castle; reach it; enter it. May it offer you happiness as well as protection.

**XIX.19.2** The wind rose up with the midspace; I lead you forward to that castle; reach it; enter it. May it offer you happiness as well as protection.

**XIX.19.3** The sun rose up with the sky; I lead you forward to that castle; reach it; enter it. May it offer you happiness as well as protection.

**XIX.19.4** The moon rose up with the asterisms; I lead you forward to that castle; reach it; enter it. May it offer you happiness as well as protection.

**XIX.19.5** Soma (the cure-juice) rose up with the herbs; I lead you forward to that castle; reach it; enter it. May it offer you happiness as well as protection.

**XIX.19.6** The sacrifice rose up with the sacrificial gifts; I lead you forward to that castle; reach it; enter it. May it offer you happiness as well as protection.

समुद्रो नदीभिरुदक्रामत्तां पुरं प्र णयामि वः ।
तामा विंशत तां प्र विंशत सा वः शर्म च वर्म च यच्छतु ॥७॥
ब्रह्म ब्रह्मचारिभिरुदक्रामत्तां पुरं प्र णयामि वः ।
तामा विंशत तां प्र विंशत सा वः शर्म च वर्म च यच्छतु ॥८॥
इन्द्रो वीर्ये३णोदक्रामत्तां पुरं प्र णयामि वः ।
तामा विंशत तां प्र विंशत सा वः शर्म च वर्म च यच्छतु ॥९॥
देवा अमृतेनोदक्रामंस्तां पुरं प्र णयामि वः ।
तामा विंशत तां प्र विंशत सा वः शर्म च वर्म च यच्छतु ॥१०॥
प्रजापतिः प्रजाभिरुदक्रामत्तां पुरं प्र णयामि वः ।
तामा विंशत तां प्र विंशत सा वः शर्म च वर्म च यच्छतु ॥११॥

समुद्रः । नदीभिः । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ ।
विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ७ ॥
ब्रह्म । ब्रह्मचारिऽभिः । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ ।
विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ८ ॥
इन्द्रः । वीर्येण । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ ।
विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ९ ॥
देवाः । अमृतेन । उत् । अक्रामन् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ ।
विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ १० ॥
प्रजाऽपतिः । प्रऽजाभिः । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् ।
आ । विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ११ ॥

**XIX.19.7** The ocean rose up with the rivers; I lead you forward to that castle; reach it; enter it. May it offer you happiness as well as protection.

**XIX.19.8** The sacred knowledge rose up with the seekers of sacred knowledge; I lead you forward to that castle; reach it; enter it. May it offer you happiness as well as protection.

**XIX.19.9** The resplendent self rose up with the valour; I lead you forward to that castle; reach it; enter it. May it offer you happiness as well as protection.

**XIX.19.10** The enlightened ones rose up with the immortality; I lead you forward to that castle; reach it; enter it. May it offer you happiness as well as protection.

**XIX.19.11** The Lord of creatures rose up with the offsprings; I lead you forward to that castle; reach it; enter it. May it offer you happiness as well as protection.

( २० ) विंशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवताः । (१) प्रथमर्चस्त्रिष्टुप्, (२) द्वितीयाया जगती, (३) तृतीयायाः पुरस्ताद्बृहती, (४) चतुर्थ्याश्चानुष्टुप् छन्दांसि ॥

अप न्यधुः पौरुषेयं वधं यमिन्द्राग्नी धाता सविता बृहस्पतिः ।
सोमो राजा वरुणो अश्विना यमः पूषास्मान्परि पातु मृत्योः ॥१॥
यानि चकार भुवनस्य यस्पतिः प्रजापतिर्मातरिश्वा प्रजाभ्यः ।
प्रदिशो यानि वसते दिशश्च तानि मे वर्माणि बहुलानि सन्तु ॥२॥
यत्ते तनूष्वनह्यन्त देवा द्युराजयो देहिनः ।
इन्द्रो यच्चक्रे वर्म तदस्मान्पातु विश्वतः ॥३॥
वर्म मे द्यावापृथिवी वर्माहर्वर्म सूर्यः ।
वर्म मे विश्वे देवाः क्रन्मा मा प्रापत्प्रतीचिका ॥४॥

अप । न्यधुः । पौरुषेयम् । वधम् । यम् । इन्द्राग्नी इति । धाता । सविता । बृहस्पतिः ।
सोमः । राजा । वरुणः । अश्विना । यमः । पूषा । अस्मान् । परि । पातु । मृत्योः ॥ १ ॥
यानि । चकार । भुवनस्य । यः । पतिः । प्रजाऽपतिः । मातरिश्वा । प्रऽजाभ्यः ।
प्रऽदिशः । यानि । वसते । दिशः । च । तानि । मे । वर्माणि । बहुलानि । सन्तु ॥२॥
यत् । ते । तनूषु । अनह्यन्त । देवाः । द्युऽराजयः । देहिनः ।
इन्द्रः । यत् । चक्रे । वर्म । तत् । अस्मान् । पातु । विश्वतः ॥ ३ ॥
वर्म । मे । द्यावापृथिवी इति । वर्म । अहः । वर्म । सूर्यः ।
वर्म । मे । विश्वे । देवाः । क्रन् । मा । मा । प्र । आपत् । प्रतीचिका ॥ ४ ॥

( २१ ) एकविंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । छन्दांसि देवताः । एकावसाना द्विपदा साम्नी बृहती छन्दः ॥

गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तिस्त्रिष्टुब्जगत्यै ॥१॥

गायत्री । उष्णिक् । अनुऽस्तुप् । बृहती । पङ्क्तिः । त्रिऽस्तुप् । जगत्यै ॥ १ ॥

## For protection by various Gods

**XIX.20.1** From the deadly weapon, which the foemen have secretly sent towards us, may the Lord resplendent and adorable and sustainer, the impeller Lord, the lord supreme, the blissful Lord, the venerable king, the twins-divine, the Controller Lord, the nourisher Lord fully protect us from that death.

**XIX.20.2** Whatever He, who is the Lord of universe and the Lord of creatures breathing in the midspace, has made an armour for His creatures, and what the quarters and the mid-quarters put on, may all those be my ample defenses.

**XIX.20.3** What (armour) those bounties of Nature, shining in the sky, assuming bodily form, put on their bodies, what the resplendent self makes an armour for himself, may that protect us from all sides.

**XIX.20.4** May heaven and earth be my armour; (my) armour be the day; armour be the sun. May all the bounties of Nature make my armour. May the calamity (army of enemies) never reach me.

## The Chandas : the meters

**XIX.21.1** (Svāhā) to Gāyatrī, Usnik, Anuśtup, Brhatī, Pañkti, Tristup and Jagatī.

### ( २२ ) द्वाविंशं सूक्तम्

(१-२१) एकविंशत्यृचस्यास्य सूक्तस्याङ्गिरा ऋषिः । मन्त्रोक्ता देवताः । (१) प्रथमर्चः साम्न्युष्णिक्, (२, ६, १४-१६, २०) द्वितीयाषष्ठयोश्चतुर्दश्यादितृचस्य विंश्याश्च दैवी पङ्क्तिः, (३, १९) तृतीयैकोनविंश्योः प्राजापत्या गायत्री, (४, ७, ११, १७) चतुर्थीसप्तम्येकादशीसप्तदशीनां दैवी जगती, (५, १२-१३) पञ्चमीद्वादशीत्रयोदशीनां दैवी त्रिष्टुप्, (८-१०) अष्टम्यादितृचस्यासुरी जगती, (१८) अष्टादश्या आसुर्यनुष्टुप् (एता एकावसानाः), (२१) एकविंश्याश्च चतुष्पदा त्रिष्टुप् छन्दांसि ॥

आङ्गिरसानामाद्यैः पञ्चानुवाकैः स्वाहा ॥१॥ षष्ठाय स्वाहा ॥२॥
सप्तमाष्टमाभ्यां स्वाहा ॥३॥ नीलनखेभ्यः स्वाहा ॥४॥
हरितेभ्यः स्वाहा ॥५॥ क्षुद्रेभ्यः स्वाहा ॥६॥
पर्यायिकेभ्यः स्वाहा ॥७॥ प्रथमेभ्यः शङ्खेभ्यः स्वाहा ॥८॥
द्वितीयेभ्यः शङ्खेभ्यः स्वाहा ॥९॥ तृतीयेभ्यः शङ्खेभ्यः स्वाहा ॥१०॥
उपोत्तमेभ्यः स्वाहा ॥११॥ उत्तमेभ्यः स्वाहा ॥१२॥

आङ्गिरसानाम् । आद्यैः । पञ्च । अनुऽवाकैः । स्वाहा ॥ १ ॥

षष्ठाय । स्वाहा ॥ २ ॥

सप्तमऽअष्टमाभ्याम् । स्वाहा ॥ ३॥

नीलऽनखेभ्यः । स्वाहा ॥४॥

हरितेभ्यः । स्वाहा ॥ ५ ॥

क्षुद्रेभ्यः । स्वाहा ॥ ६ ॥

पर्यायिकेभ्यः । स्वाहा ॥ ७ ॥

प्रथमेभ्यः । शङ्खेभ्यः । स्वाहा ॥ ८ ॥

द्वितीयेभ्यः । शङ्खेभ्यः । स्वाहा ॥ ९ ॥

तृतीयेभ्यः । शङ्खेभ्यः । स्वाहा ॥१०॥

उपऽउत्तमेभ्यः । स्वाहा ॥ ११ ॥

उत्ऽतमेभ्यः । स्वाहा ॥१२॥

## Homage to the parts of Atharva Veda

**XIX.22.1** Svāhā with the first five Anuvākas (chapters) of Atharva Veda (the compositions of Angiras).

**XIX.22.2** Svāhā to the sixth (chapter).

**XIX.22.3** Svāhā to the seventh and the eighth (chapter).

**XIX.22.4** Svāhā with the (chapters called) Nīlnakha.

**XIX.22.5** Svāhā with the (verses called) Hatitas.

**XIX.22.6** Svāhā to small (chapters or hymns).

**XIX.22.7** Svāhā to the chapters containing Paryāyas (hymns containing regularly recurring phrases or sentences).

**XIX.22.8** Svāhā to the chapters containing the first Śankhas (a particular type of mantras).

**XIX.22.9** Svāhā to the chapters containing the second Śandkhas.

**XIX.22.10** Svāhā to the chapters containing the third Śankhas.

**XIX.22.11** Svāhā to the hymns of the last but one chapter.

**XIX.22.12** Svāhā to the hymns of the last chapter.

उत्तरेभ्यः स्वाहा ॥१३॥ ऋषिभ्यः स्वाहा ॥१४॥
शिखिभ्यः स्वाहा ॥१५॥ गणेभ्यः स्वाहा ॥१६॥
महागणेभ्यः स्वाहा ॥१७॥ सर्वेभ्योङ्गिरोभ्यो विदगणेभ्यः स्वाहा ॥१८॥
पृथक्सहस्राभ्यां स्वाहा ॥१९॥ ब्रह्मणे स्वाहा ॥२०॥
ब्रह्मज्येष्ठा संभृता वीर्याणि ब्रह्माग्रे ज्येष्ठं दिवमा ततान।
भूतानां ब्रह्मा प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः ॥२१॥

उत्ऽतरेभ्यः । स्वाहा ॥ १३ ॥
ऋषिऽभ्यः । स्वाहा ॥१४॥
शिखिऽभ्यः । स्वाहा ॥ १५ ॥
गणेभ्यः । स्वाहा ॥ १६॥
महाऽगणेभ्यः । स्वाहा ॥ १७ ॥
सर्वेभ्यः । अङ्गिरःऽभ्यः । विदऽगणेभ्यः । स्वाहा ॥ १८ ॥
पृथक्ऽसहस्राभ्याम् । स्वाहा । १९॥
ब्रह्मणे । स्वाहा ॥ २० ॥
ब्रह्मऽज्येष्ठा । समऽभृता । वीर्याणि । ब्रह्म । अग्रे । ज्येष्ठम् । दिवम् । आ । ततान ।
भूतानाम् । ब्रह्मा । प्रथमः । उत । जज्ञे । तेन । अर्हति । ब्रह्मणा । स्पर्धितुम् । कः ॥

**XIX.22.13** Svāhā to the latter hymns.

**XIX.22.14** Svāhā to the seers.

**XIX.22.15** Svāhā to the learning pupils.

**XIX.22.16** Svāhā to Ganas (assemblies of seers).

**XIX.22.17** Svāhā to large ganas.

**XIX.22.18** Svāhā to all the Añgirases, known to Ganas.

**XIX.22.19** Svāhā to the two with a thousand each severally.

**XIX.22.20** Svāhā to the Divine supreme.

**XIX.22.21** All the valours collected are surpassed by the Divine supreme spread out the sky. The Divine supreme existed before the beings were born. So who can dare to compete with that Divine supreme.

## ( २३ ) त्रयोविंशं सूक्तम्

(१-३०) त्रिंशदृचस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ताश्चन्द्रमा वा देवता । (१) प्रथमर्च आसुरी बृहती, (२-७, २०, २३, २७) द्वितीयादिषळृचस्य विंशीत्रयोविंशीसप्तविंशीनाञ्च दैवी त्रिष्टुप्, (८, १०-१२, १४-१६) अष्टम्या दशम्यादितृचस्य चतुर्दश्यादितृचस्य च प्राजापत्या गायत्री, (१७, १९, २१, २४-२५, २९) सप्तदश्येकोनविंश्येकविंशीचतुर्विंशीरञ्चविंश्येकोनत्रिंशीनां दैवी पङ्क्तिः, (९, १३, १८, २२, २६, २८) नवमीत्रयोदश्यष्टादशीद्वाविंशीषड्विंश्यष्टाविंशीनां दैवी जगती, ( एता एकावसानाः ), (३०) त्रिंश्याश्च चतुष्पदा त्रिष्टुप् छन्दांसि ॥

आथर्वणानां चतुर्ऋचेभ्यः स्वाहा ॥१॥ पञ्चर्चेभ्यः स्वाहा ॥२॥
षड्चेभ्यः स्वाहा ॥३॥ सप्तर्चेभ्यः स्वाहा ॥४॥
अष्टर्चेभ्यः स्वाहा ॥५॥ नवर्चेभ्यः स्वाहा ॥६॥
दशर्चेभ्यः स्वाहा ॥७॥ एकादशर्चेभ्यः स्वाहा ॥८॥
द्वादशर्चेभ्यः स्वाहा ॥९॥ त्रयोदशर्चेभ्यः स्वाहा ॥१०॥
चतुर्दशर्चेभ्यः स्वाहा ॥११॥ पञ्चदशर्चेभ्यः स्वाहा ॥१२॥

आथर्वणानाम् । चतुःऽऋचेभ्यः । स्वाहा ॥ १ ॥
पञ्चऽऋचेभ्यः । स्वाहा ॥ २ ॥
षट्ऽऋचेभ्यः । स्वाहा ॥ ३ ॥
सप्तऽऋचेभ्यः । स्वाहा ॥ ४ ॥
अष्टऽऋचेभ्यः । स्वाहा ॥ ५ ॥
नवऽऋचेभ्यः । स्वाहा ॥ ६ ॥
दशऽऋचेभ्यः । स्वाहा ॥ ७ ॥
एकादशऽऋचेभ्यः । स्वाहा ॥ ८ ॥
द्वादशऽऋचेभ्यः । स्वाहा ॥ ९ ॥
त्रयोदशऽऋचेभ्यः । स्वाहा ॥ १० ॥
चतुर्दशऽऋचेभ्यः । स्वाहा ॥११॥
पञ्चदशऽऋचेभ्यः । स्वाहा ॥ १२ ॥

## Homage to the parts of Atharva Veda

**XIX.23.1** Svāhā to the four-versed (hymns) of the Atharva Veda (the song of Atharvan).

**XIX.23.2** Svāhā to the five-versed ones.

**XIX.23.3** Svāhā to the six-versed ones.

**XIX.23.4** Svāhā to the seven-versed ones.

**XIX.23.5** Svāhā to the eight-versed ones.

**XIX.23.6** Svāhā to the nine-versed ones.

**XIX.23.7** Svāhā to the ten-versed ones.

**XIX.23.8** Svāhā to the eleven-versed ones.

**XIX.23.9** Svāhā to the twelve-versed ones.

**XIX.23.10** Svāhā to the thirteen-versed ones.

**XIX.23.11** Svāhā to the fourteen-versed ones.

**XIX.23.12** Svāhā to the fifteen-versed ones.

षोडशर्चेभ्यः स्वाहा ॥१३॥ सप्तदशर्चेभ्यः स्वाहा ॥१४॥
अष्टादशर्चेभ्यः स्वाहा ॥१५॥ एकोनविंशतिः स्वाहा ॥१६॥
विंशतिः स्वाहा ॥१७॥ महत्काण्डाय स्वाहा ॥१८॥
तृचेभ्यः स्वाहा ॥१९॥ एकर्चेभ्यः स्वाहा ॥२०॥
क्षुद्रेभ्यः स्वाहा ॥२१॥ एकानृचेभ्यः स्वाहा ॥२२॥
रोहितेभ्यः स्वाहा ॥२३॥ सूर्याभ्यां स्वाहा ॥२४॥

षोडशऽऋचेभ्यः । स्वाहा ॥ १३ ॥
सप्तदशऽऋचेभ्यः । स्वाहा ॥१४॥
अष्टादशऽऋचेभ्यः। स्वाहा ॥१५॥
एकोनविंशतिः । स्वाहा ॥ १६ ॥
विंशतिः । स्वाहा ॥ १७ ॥
महत्ऽकाण्डाय । स्वाहा ॥ १८ ॥
तृचेभ्यः । स्वाहा ॥ १९ ॥
एकऽऋचेभ्यः । स्वाहा ॥ २० ॥
क्षुद्रेभ्यः । स्वाहा ॥ २१ ॥
एकऽअनृचेभ्यः। स्वाहा ॥ २२ ॥
रोहितेभ्यः । स्वाहा ॥ २३ ॥
सूर्याभ्याम् । स्वाहा ॥ २४ ॥

**XIX.23.13** Svāhā to the sixteen-versed ones.

**XIX.23.14** Svāhā to the seventeen-versed ones.

**XIX.23.15** Svāhā to the eighteen-versed ones.

**XIX.23.16** Svāhā to nineteen.

**XIX.23.17** Svāhā to twenty.

**XIX.23.18** Svāhā to the great kanda (book or chapter).

**XIX.23.19** Svāhā to the three-versed ones.

**XIX.23.20** Svāhā to the one-versed ones.

**XIX.23.21** Svāhā to the small ones.

**XIX.23.22** Svāhā to the non-Rk-single-versed ones.

**XIX.23.23** Svāhā to the ones about Rohita (sun).

**XIX.23.24** Svāhā to the two about Sūrya (maiden to be married).

व्रात्याभ्यां स्वाहा ॥२५॥ प्राजापत्याभ्यां स्वाहा ॥२६॥
विषासह्यै स्वाहा ॥२७॥ मङ्गलिकेभ्यः स्वाहा ॥२८॥
ब्रह्मणे स्वाहा ॥२९॥
ब्रह्मज्येष्ठा संभृता वीर्याणि ब्रह्माग्रे ज्येष्ठं दिवमा ततान ।
भूतानां ब्रह्मा प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः ॥३०॥

व्रात्याभ्याम् । स्वाहा ॥ २५ ॥

प्राजाऽपत्याभ्याम् । स्वाहा ॥२६॥

विऽससह्यै । स्वाहा ॥ २७ ॥

मङ्गलिकेभ्यः । स्वाहा ॥ २८ ॥

ब्रह्मणे । स्वाहा ॥ २९ ॥

ब्रह्मऽज्येष्ठा । सम्ऽभृता । वीर्याणि । ब्रह्म । अग्रे । ज्येष्ठम् । दिवम् । आ । ततान ।
भूतानाम । ब्रह्मा । प्रथमः । उत । जज्ञे । तेन । अर्हति । ब्रह्मणा । स्पर्धितुम् । कः ॥३०॥

( २४ ) चतुर्विंशं सूक्तम्

(१-८) अष्टर्चस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता ब्रह्मणस्पतिर्वा देवता । (१-३) प्रथमादितृचस्यानुष्टुप्, (४-६, ८) चतुर्थ्यादितृचस्याष्टम्या ऋचश्च त्रिष्टुप्, (७) सप्तम्याश्च त्रिपदार्षी गायत्री छन्दांसि ॥

येन देवं सवितारं परि देवा अधारयन् ।
तेनेमं ब्रह्मणस्पते परि राष्ट्राय धत्तन ॥१॥

येन । देवम् । सवितारम् । परि । देवाः । अधारयन् ।
तेन । इमम् । ब्रह्मणः । पते । परि । राष्ट्राय । धत्तन ॥ १ ॥

**XIX.23.25** Svāhā to the two about Vrātya (learned guest).

**XIX.23.26** Svāhā to the two about Prajāpati (the Lord of the creatures).

**XIX.23.27** Svāhā to the (one beginning with the word) Viṣāsahi.

**XIX.23.28** Svāhā to the auspicious one (euphemistically, inauspicious ones).

**XIX.23.29** Svāhā to the Divine supreme.

**XIX.23.30** All the valours collected are surpassed by the Divine supreme. In the beginning the Divine supreme spread out the sky. The Divine supreme existed before the beings were born. So, who can dare to compete with that Divine supreme.

### For prosperity and protection

**XIX.24.1** Wherewith the enlightened ones invested the divine impeller Lord, therewith, O Lord of knowledge, may you invest this person for kingly power.

परीममिन्द्रमायुषे महे क्षत्राय धत्तन ।
यथैनं जरसे नयां ज्योक्क्षत्रेधि जागरत् ॥२॥
परीमं सोममायुषे महे श्रोत्राय धत्तन ।
यथैनं जरसे नयां ज्योक्श्रोत्रेधि जागरत् ॥३॥
परि धत्त धत्त नो वर्चसेमं जरामृत्युं कृणुत दीर्घमायुः ।
बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिधातवा उं ॥४॥
जरां सु गच्छ परि धत्स्व वासो भवा गृष्टीनामभिशस्तिपा उं ।
शतं च जीव शरदः पुरूची रायश्च पोषमुपसंव्ययस्व ॥५॥
परीदं वासो अधिथाः स्वस्तयेभूर्वापीनामभिशस्तिपा उं ।
शतं च जीव शरदः पुरूचीर्वसूनि चारुर्वि भजासि जीवन् ॥६॥
योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥७॥

परि । इमम् । इन्द्रम् । आयुषे । महे । क्षत्राय । धत्तन ।
यथा । एनम् । जरसे । नयात् । ज्योक् । क्षत्रे । अधि । जागरत् ॥ २ ॥
परि । इमम् । सोमम् । आयुषे । महे । श्रोत्राय । धत्तन ।
यथा । एनम् । जरसे । नयात् । ज्योक् । श्रोत्रे । अधि । जागरत् ॥ ३ ॥
परि । धत्त । धत्त । नः । वर्चसा । इमम् । जराऽमृत्युम् । कृणुत । दीर्घम् । आयुः ।
बृहस्पतिः । प्र । अयच्छत् । वासः । एतत् । सोमाय । राज्ञे । परिऽधातवै । ऊं इति ॥ ४ ॥
जराम् । सु । गच्छ । परि । धत्स्व । वासः । भव । गृष्टीनाम् । अभिशस्तिऽपाः । ऊं इति ।
शतम् । च । जीव । शरदः । पुरूचीः । रायः । च । पोषम् । उपऽसंव्ययस्व ॥ ५ ॥
परि । इदम् । वासः । अधिथाः । स्वस्तये । अभूः । वापीनाम् । अभिशस्तिऽपाः । ऊं
इति । शतम् । च । जीव । शरदः । पुरूचीः । वसूनि । चारुः । वि । भजासि । जीवन् ॥६॥
योगेऽयोगे । तवःऽतरम् । वाजेऽवाजे । हवामहे । सखायः । इन्द्रम् । ऊतये ॥ ७ ॥

**XIX.24.2** May you enclothe this resplendent one for long life, for great ruling power, so that I may lead him to ripe old age. May he (remain awake and alert to) watch over his dominion for long.

**XIX.24.3** May you enclothe this blissful one for long life, for great listening (perceiving) capacity, so that I may lead him to ripe old age. May he (remain awake and alert to) listen to his dominion for long.

**XIX.24.4** Enclothe (him); enclothe him with our splendour. Grant him long life to die of ripe old age. This is the garment which the Lord supreme presented to the blissful king for investiture.

**XIX.24.5** May you reach ripe old age well. Put on the garment. May you become protector of people from misfortune. May you live through a hundred long autumns. May you accumulate and spend properly plenty of riches.

**XIX.24.6** You have put on this garment for weal. Also you have become protector of your allies from misfortune. May you live through a hundred long autumns. Living handsomely, may you share out riches.

**XIX.24.7** On every occasion, in every noble work, we invoke the resplendent God, the best among our friends, for our protection and happiness.

हिरण्यवर्णो अजरः सुवीरो जरामृत्युः प्रजया सं विशस्व ।
तदग्निराह तदु सोम आह बृहस्पतिः सविता तदिन्द्रः ॥८॥

हिरण्यऽवर्णः । अजरः । सुऽवीरः । जराऽमृत्युः । प्रऽजया । सम् । विशस्व ।
तत् । अग्निः । आह । तत् । ऊं इति । सोमः । आह । बृहस्पतिः । सविता । तत् । इन्द्रः ।८।

( २५ ) पञ्चविंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य गोपथ ऋषिः । वाजी देवता । अनुष्टुप् छन्दः ॥

अश्रान्तस्य त्वा मनसा युनज्मि प्रथमस्य च ।
उत्कूलमुद्वहो भवोदुह्य प्रति धावतात् ॥१॥

अश्रान्तस्य । त्वा । मनसा । युनज्मि । प्रथमस्य । च ।
उत्ऽकूलम् । उत्ऽवहः । भव । उत्ऽउह्य । प्रति । धावतात् ॥ १ ॥

( २६ ) षड्विंशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । अग्निर्हिरण्यञ्च देवते । (१-२) प्रथमाद्वितीययोर्ऋचोस्त्रिष्टुप्, (३) तृतीयाया अनुष्टुप्, (४) चतुर्थ्याश्च पथ्यापङ्क्तिश्छन्दांसि ॥

अग्नेः प्रजातं परि यद्धिरण्यममृतं दध्रे अधि मर्त्येषु ।
य एनद्वेद स इदेनमर्हति जरामृत्युर्भवति यो बिभर्ति ॥१॥
यद्धिरण्यं सूर्येण सुवर्णं प्रजावन्तो मनवः पूर्व ईषिरे ।
तत्त्वा चन्द्रं वर्चसा सं सृजत्यायुष्मान्भवति यो बिभर्ति ॥२॥
आयुषे त्वा वर्चसे त्वौजसे च बलाय च ।
यथा हिरण्यतेजसा विभासासि जनाँ अनु ॥३॥

अग्नेः । प्रऽजातम् । परि । यत् । हिरण्यम् । अमृतम् । दध्रे । अधि । मर्त्येषु ।
यः । एनत् । वेद । सः । इत् । एनम् । अर्हति । जराऽमृत्युः । भवति । यः । बिभर्ति ॥१॥
यत् । हिरण्यम् । सूर्येण । सुऽवर्णम् । प्रजाऽवन्तः । मनवः । पूर्वे । ईषिरे ।
तत् । त्वा । चन्द्रम । वर्चसा । सम् । सृजति । आयुष्मान् । भवति । यः । बिभर्ति ॥ २ ॥
आयुषे । त्वा । वर्चसे । त्वा । ओजसे । च । बलाय । च ।
यथा । हिरण्यऽतेजसा । विऽभासासि । जनान् । अनु ॥ ३ ॥

**XIX.24.8** Lustrous like gold, unaging, blessed with good sons, may you live with your progeny to die in ripe old age. This is what the adorable Lord has said, the blissful Lord has said, the Lord supreme, the impeller Lord, and the resplendent Lord has said.

### Vājī : To a horse

**XIX.25.1** I yoke you with the mind of one, who is unwearied and determined to remain (come) first. Be a swimmer against the stream and a bearer uphill. Bearing me up gallop to the destination.

### Hiraṇyam : with something Golden

**XIX.26.1** The gold, which is born from fire, bestows immortality on the mortals. Whoever know this to be so, he deserves it (the gold). Whoso wears it, reaches the good old age before death.

**XIX.26.2** The gold, which has beauteous colour like that of the sun, and which was sought by the men of old with numerous children, that pleasing one shall endow you with lustre. Whoso wears it, has a long, long life.

**XIX.26.3** You for a long life, for lustre, and for vigour, and for strength (with gold I adorn), so that you may shine out with the brilliance of gold among the people.

यद्वेद राजा वरुणो वेद देवो बृहस्पतिः ।
इन्द्रो यद्वृत्रहा वेद तत्त आयुष्यं भुवत्तत्ते वर्चस्यं भुवत् ॥४॥

यत् । वेद । राजा । वरुणः । वेद । देवः । बृहस्पतिः । इन्द्रः । यत् । वृत्रऽहा ।
वेद । तत् । ते । आयुष्यम् । भुवत् । तत् । ते । वर्चस्यम् । भुवत् ॥ ४ ॥

### ( २७ ) सप्तविंशं सूक्तम्

(१-१५) पञ्चदशर्चस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । त्रिवृच्चन्द्रमा वा देवता । (१-२, ४-८, १४) प्रथमाद्वितीययोर्ऋचोश्चतुर्थ्यादिपञ्चानां चतुर्दश्याश्चानुष्टुप्, (३, ९) तृतीयानवम्योस्त्रिष्टुप्, (१०) दशम्या विराट्स्थाना त्रिष्टुप्, (११) एकादश्या एकावसानार्च्युष्णिक्, (१२) द्वादश्या एकावसानार्च्यनुष्टुप्, (१३) त्रयोदश्या एकावसाना साम्नी त्रिष्टुप्, (१५) पञ्चदश्याश्च त्र्यवसाना सप्तपदा बृहतीगर्भातिशक्वरी छन्दांसि ॥

गोभिष्ट्वा पात्वृषभो वृषा त्वा पातु वाजिभिः ।
वायुष्ट्वा ब्रह्मणा पात्विन्द्रस्त्वा पात्विन्द्रियैः ॥१॥
सोमस्त्वा पात्वोषधीभिर्नक्षत्रैः पातु सूर्यः ।
माद्भ्यस्त्वा चन्द्रो वृत्रहा वातः प्राणेन रक्षतु ॥२॥
तिस्रो दिवस्तिस्रः पृथिवीस्त्रीण्यन्तरिक्षाणि चतुरः समुद्रान् ।
त्रिवृतं स्तोमं त्रिवृत आप आहुस्तास्त्वा रक्षन्तु त्रिवृता त्रिवृद्भिः ॥३॥
त्रीन्नाकांस्त्रीन्त्समुद्रांस्त्रीन्ब्रध्नांस्त्रीन्वैष्टपान् ।
त्रीन्मातरिश्वनस्त्रीन्त्सूर्यान्गोप्तृन्कल्पयामि ते ॥४॥

गोभिः । त्वा । पातु । ऋषभः । वृषा । त्वा । पातु । वाजिऽभिः ।
वायुः । त्वा । ब्रह्मणा । पातु । इन्द्रः । त्वा । पातु । इन्द्रियैः ॥ १ ॥
सोमः । त्वा । पातु । ओषधीभिः । नक्षत्रैः । पातु । सूर्यः ।
मात्ऽभ्यः । त्वा । चन्द्रः । वृत्रऽहा । वातः । प्राणेन । रक्षतु ॥ २ ॥
तिस्रः । दिवः । तिस्रः । पृथिवीः । त्रीणि । अन्तरिक्षाणि । चतुरः । समुद्रान् । त्रिऽवृतम् ।
स्तोमम् । त्रिऽवृतः । आपः । आहुः । ताः । त्वा । रक्षन्तु । त्रिऽवृता । त्रिवृत्ऽभिः ॥३॥
त्रीन् । नाकान् । त्रीन् । समुद्रान् । त्रीन् । ब्रध्नान् । त्रीन् । वैष्टपान् ।
त्रीन् । मातरिश्वनः । त्रीन् । सूर्यान् । गोप्तृन् । कल्पयामि । ते ॥ ४ ॥

**XIX.26.4** What the venerable Lord, the sovereign knows, what the divine Lord supreme knows, what the resplendent Lord, the destroyer of nescience knows, may all that be bestower of long life and bestower of lustre to you.

## For protection etc. : triple devices

**XIX.27.1** May the breeding bull make you prosper with cows, may the stallion make you prosper with speedy steeds; may the vital air protect you with perception; may the resplendent self make you strong with sense-organs.

**XIX.27.2** May the cure-juice protect you with herbs; may the sun protect you with the constellations; may the moon, destroyer of darkness, protect you with months; may the wind protect you with the vital breath.

**XIX.27.3** Three skies, three earths, three midspaces, four oceans, three-fold praise-song, and three-fold waters they have mentioned. May those, triple ones, protect you with three-fold devices.

**XIX.27.4** Three sorrowless worlds (heavens), three oceans (of the midspace), three luminous worlds (of the sun), three summits (of heaven), three winds, and three suns I make your protections.

घृतेन त्वा समुक्षाम्यग्न आज्येन वर्धयन् ।
अग्नेश्चन्द्रस्य सूर्यस्य मा प्राणं मायिनो दभन् ॥५॥
मा वः प्राणं मा वोपानं मा हरो मायिनो दभन् ।
भ्राजन्तो विश्ववेदसो देवा दैव्येन धावत ॥६॥
प्राणेनाग्निं सं सृजति वातः प्राणेन संहितः ।
प्राणेन विश्वतोमुखं सूर्यं देवा अजनयन् ॥७॥
आयुषायुष्कृतां जीवायुष्माञ्जीव मा मृथाः ।
प्राणेनात्मन्वतां जीव मा मृत्योरुदगा वशम् ॥८॥
देवानां निहितं निधिं यमिन्द्रोन्वविन्दत्पथिभिर्देवयानैः ।
आपो हिरण्यं जुगुपुस्त्रिवृद्भिस्तास्त्वा रक्षन्तु त्रिवृता त्रिवृद्भिः ॥९॥
त्रयस्त्रिंशद्देवतास्त्रीणि च वीर्याणि प्रियायमाणा जुगुपुरप्स्वन्तः ।
अस्मिंश्चन्द्रे अधि यद्धिरण्यं तेनायं कृणवद्वीर्याणि ॥१०॥

घृतेन । त्वा । सम् । उक्षामि । अग्ने । आज्येन । वर्धयन् ।
अग्नेः । चन्द्रस्य । सूर्यस्य । मा । प्राणम् । मायिनः । दभन् ॥ ५ ॥
मा । वः । प्राणम् । मा । वः । अपानम् । मा । हरः । मायिनः । दभन् ।
भ्राजन्तः । विश्वऽवेदसः । देवाः । दैव्येन । धावत ॥ ६ ॥
प्राणेन । अग्निम् । सम् । सृजति । वातः । प्राणेन । सम्ऽहितः ।
प्राणेन । विश्वतःऽमुखम् । सूर्यम् । देवाः । अजनयन् ॥ ७ ॥
आयुषा । आयुःऽकृताम् । जीव । आयुष्मान् । जीव । मा । मृथाः ।
प्राणेन । आत्मन्ऽवताम् । जीव । मा । मृत्योः । उत् । अगाः । वशम् ॥ ८ ॥
देवानाम् । निऽहितम् । निऽधिम् । यम् । इन्द्रः । अनुऽअविन्दत् । पथिऽभिः । देवऽयानैः ।
आपः । हिरण्यम् । जुगुपुः । त्रिवृत्ऽभिः । ताः । त्वा । रक्षन्तु । त्रिऽवृता । त्रिवृत्ऽभिः ॥९॥
त्रयःऽत्रिंशत् । देवताः । त्रीणि । च । वीर्याणि । प्रियऽयमाणाः । जुगुपुः । अप्ऽसु । अन्तः ।
अस्मिन् । चन्द्रे । अधि । यत् । हिरण्यम् । तेन । अयम् । कृणवत् । वीर्याणि ॥ १० ॥

**XIX.27.5** O fire divine, with clarified butter I sprinkle you, augmenting you with sacrificial butter. May not the wily ones suppress the vital force of fire, of moon or of sun.

**XIX.27.6** May not the wily ones suppress your in-breath, nor your out-breath, nor (your) strength. O blazing bounties of Nature, possessors of all riches, may you rush up with your divine power (to help this person).

**XIX.27.7** He unites fire with vital breath. The wind is compact with vital breath. With vital breath the bounties of Nature have created the sun, facing each and every one.

**XIX.27.8** Live with the life-span of life-span-makers. Live a long life. Do not die. Live with the life of the spirited ones. Do not submit to death.

**XIX.27.9** Secretly kept treasure of the enlightened ones, which the resplendent self has found out by traversing the godly paths, that treasure - the gold - the waters have guarded with triple defenses; may those triple one protect you by threefold devices.

**XIX.27.10** Thirty-three deities and three great vigours, being pleased, guarded this (gold) within the waters. What gold is there on this pleasing one, with that, may this person perform heroic deeds.

ये देवा दिव्येकादश स्थ ते देवासो हविरिदं जुषध्वम् ॥११॥
ये देवा अन्तरिक्ष एकादश स्थ ते देवासो हविरिदं जुषध्वम् ॥१२॥
ये देवाः पृथिव्यामेकादश स्थ ते देवासो हविरिदं जुषध्वम् ॥१३॥
असपत्नं पुरस्तात्पश्चान्नो अभयं कृतम् ।
सविता मा दक्षिणत उत्तरान्मा शचीपतिः ॥१४॥
दिवो मादित्या रक्षन्तु भूम्या रक्षन्त्वग्नयः ।
इन्द्राग्नी रक्षतां मा पुरस्तादश्विनावभितः शर्म यच्छताम् ।
तिरश्चीनघ्न्या रक्षतु जातवेदा भूतकृतो मे सर्वतः सन्तु वर्म ॥१५॥

ये । देवाः । दिवि । एकादश । स्थ । ते । देवासः । हविः । इदम् । जुषध्वम् ॥११॥
ये । देवाः । अन्तरिक्षे । एकादश । स्थ । ते । देवासः । हविः । इदम् । जुषध्वम् ॥१२॥
ये । देवाः । पृथिव्याम् । एकादश । स्थ । ते । देवासः । हविः । इदम् । जुषध्वम् ॥१३॥
असपत्नम् । पुरस्तात् । पश्चात् । नः । अभयम् । कृतम् ।
सविता । मा । दक्षिणतः । उत्तरात् । मा । शचीऽपतिः ॥ १४ ॥
दिवः । मा । आदित्याः । रक्षन्तु । भूम्याः । रक्षन्तु । अग्नयः ।
इन्द्राग्नी इति । रक्षताम् । मा । पुरस्तात् । अश्विनौ । अभितः । शर्म । यच्छताम् ।
तिरश्चीन् । अघ्न्या । रक्षतु । जातऽवेदाः । भूतऽकृतः । मे । सर्वतः । सन्तु । वर्म ॥१५॥

**XIX.27.11** O You eleven bounties of Nature, that are in the sky, (those bounties of Nature) enjoy the offering.

**XIX.27.12** O you eleven bounties of Nature, that are in the midspace, (those bounties of Nature) enjoy this offering.

**XIX.27.13** O you eleven bounties of Nature, that are on the earth, (those bounties of Nature) enjoy this offering.

**XIX.27.14** Freedom from rivals in front, behind us (is) fearlessness made; Savita (protect) me on the south, the Lord of Śachi (protect) me on the north. (See also Av.XIX.16.1)

**XIX.27.15** From the sky let the Adityas defend me; from the earth let the fires defend; let Indra-and-Agni defend me in freon; let the As'vins yield (yam) refuge round about; crosswise let the inviolable (cow), let jatavedas, defend (me); let the being-makers be my defense (varman) on all sides. (Av.XIX.16.2)

( २८ ) अष्टाविंशं सूक्तम्

(१-१०) दशर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । दर्भमणिर्देवता । अनुष्टुप् छन्दः ॥

इमं बध्नामि ते मणिं दीर्घायुत्वाय तेजसे ।
दर्भं सपत्नदम्भनं द्विषतस्तपनं हृदः ॥१॥
द्विषतस्तापयन्हृदः शत्रूणां तापयन्मनः ।
दुर्हार्दः सर्वांस्त्वं दर्भ घर्म इवाभीन्त्संतापयन् ॥२॥
घर्म इवाभितपन्दर्भ द्विषतो नितपन्मणे ।
हृदः सपत्नानां भिन्धीन्द्र इव विरुजं बलम् ॥३॥
भिन्धि दर्भ सपत्नानां हृदयं द्विषतां मणे ।
उद्यन्त्वचमिव भूम्याः शिर एषां वि पातय ॥४॥
भिन्धि दर्भ सपत्नान्मे भिन्धि मे पृतनायतः ।
भिन्धि मे सर्वान्दुर्हार्दो भिन्धि मे द्विषतो मणे ॥५॥
छिन्धि दर्भ सपत्नान्मे छिन्धि मे पृतनायतः ।
छिन्धि मे सर्वान्दुर्हार्दान् छिन्धि मे द्विषतो मणे ॥६॥

इमम् । बध्नामि । ते । मणिम् । दीर्घायुऽत्वाय । तेजसे ।
दर्भम् । सपत्नऽदम्भनम् । द्विषतः । तपनम् । हृदः ॥ १ ॥
द्विषतः । तापयन् । हृदः । शत्रूणाम् । तापयन् । मनः ।
दुःऽहार्दः । सर्वान् । त्वम् । दर्भ । घर्मःऽइव । अभीन् । सम्ऽतापयन् ॥ २ ॥
घर्मःऽइव । अभिऽतपन् । दर्भ । द्विषतः । निऽतपन् । मणे ।
हृदः । सऽपत्नानाम् । भिन्द्धि । इन्द्रःऽइव । विऽरुजन् । बलम् ॥ ३ ॥
भिन्द्धि । दर्भ । सऽपत्नानाम् । हृदयम् । द्विषताम् । मणे ।
उत्ऽयन् । त्वचम्ऽइव । भूम्याः । शिरः । एषाम् । वि । पातय ॥ ४ ॥
भिन्द्धि । दर्भ । सऽपत्नान् । मे । भिन्द्धि । मे । पृतनाऽयतः ।
भिन्द्धि । मे । सर्वान् । दुःऽहार्दः । भिन्द्धि । मे । द्विषतः । मणे ॥ ५ ॥
छिन्द्धि । दर्भ । सऽपत्नान् । मे । छिन्द्धि । मे । पृतनाऽयतः ।
छिन्द्धि । मे । सर्वान् । दुःऽहार्दः । छिन्द्धि । मे । द्विषतः । मणे ॥ ६ ॥

## The darbha maṇi : for blessings

**XIX..28.1** For your long life and splendour, I bind this blessing (mani), darbha (poacymosuroides), destroyer of rivals and causing heart-burn to the malicious one.

**XIX.28.2** Burning the heart of the malicious one, and burning the mind of enemies, O darbha, may you scorch all evil-hearted persons like summer.

**XIX.28.3** Scorching the malicious one from all sides like summer, and afflicting him badly, O blessing, may you split hearts of the rivals, just as the lightening splits the clouds (vala).

**XIX.28.4** May you, O darbha, split the hearts of (my) malicious rivals; (thereafter) going upwards, may you make their heads fall down like the skin of the earth.

**XIX.28.5** Split, O darbha, my rivals; split them who invade me; split all my enemies; O blessing, split them, who hate me.

**XIX.28.6** Sever, O darbha, my rivals; sever them who invade me; sever all my enemies; O blessing, sever them who hate me.

वृश्च दर्भ सपत्नान्मे वृश्च मे पृतनायतः ।
वृश्च मे सर्वान्दुर्हार्दो वृश्च मे द्विषतो मणे ॥७॥
कृन्त दर्भ सपत्नान्मे कृन्त मे पृतनायतः ।
कृन्त मे सर्वान्दुर्हार्दान्कृन्त मे द्विषतो मणे ॥८॥
पिंश दर्भ सपत्नान्मे पिंश मे पृतनायतः ।
पिंश मे सर्वान्दुर्हार्दः पिंश मे द्विषतो मणे ॥९॥
विध्य दर्भ सपत्नान्मे विध्य मे पृतनायतः ।
विध्य मे सर्वान्दुर्हार्दो विध्य मे द्विषतो मणे ॥१०॥

वृश्च । दर्भ । सऽपत्नान् । मे । वृश्च । मे । पृतनाऽयतः ।
वृश्च । मे । सर्वान् । दुःऽहार्दः । वृश्च । मे द्विषतः । मणे ॥ ७ ॥
कृन्त । दर्भ । सऽपत्नान् । मे । कृन्त । मे । पृतनाऽयतः ।
कृन्त । मे । सर्वान् । दुःऽहार्दः कृन्त । मे । द्विषतः । मणे ॥ ८ ॥
पिंश । दर्भ । सऽपत्नान् । मे । पिंश । मे । पृतनाऽयतः ।
पिंश । मे । सर्वान् । दुःऽहार्दः । पिंश । मे । द्विषतः । मणे ॥ ९ ॥
विध्य । दर्भ । सऽपत्नान् । मे । विध्य । मे । पृतनाऽयतः ।
विध्य । मे । सर्वान् । दुःऽहार्दः । विध्य । मे । द्विषतः । मणे ॥ १० ॥

( २९ ) एकोनत्रिंशं सूक्तम्

(१-९) नवर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । दर्भमणिर्देवता । अनुष्टुप् छन्दः ॥

निक्ष दर्भ सपत्नान्मे निक्ष मे पृतनायतः ।
निक्ष मे सर्वान्दुर्हार्दो निक्ष मे द्विषतो मणे ॥१॥

निक्ष । दर्भ । सऽपत्नान् । मे । निक्ष । मे । पृतनाऽयतः ।
निक्ष । मे । सर्वान् । दुःऽहार्दः । निक्ष । मे । द्विषतः । मणे ॥ १ ॥

**XIX.28.7** Hack, O darbha, my rivals; hack them who invade me; hack all my enemies; O blessing, hack them who hate me.

**XIX.28.8** Cut down, O darbha, my rivals; cut them down who invade me; cut down all my enemies; O blessing, cut them down who hate me.

**XIX.28.9** Carve in, O darbha, my rivals; carve them in who invade me; carve in all my enemies; O blessing, carve them in, who hate me.

**XIX.28.10** Pierce through, O darbha, my rivals; pierce through them who invade me; pierce through all my enemies; O blessing, pierce through them who hate me.

**The darbha mani**

**XIX.29.1** Gore, O darbha, my rivals, gore them who invade me; gore all my enemies; O blessing, gore them who hate me.

तृन्धि दर्भ सपत्नान्मे तृन्धि मे पृतनायतः ।
तृन्धि मे सर्वान्दुर्हार्दस्तृन्धि मे द्विषतो मणे ॥२॥
रुन्धि दर्भ सपत्नान्मे रुन्धि मे पृतनायतः ।
रुन्धि मे सर्वान्दुर्हार्दो रुन्धि मे द्विषतो मणे ॥३॥
मृण दर्भ सपत्नान्मे मृण मे पृतनायतः ।
मृण मे सर्वान्दुर्हार्दो मृण मे द्विषतो मणे ॥४॥
मन्थ दर्भ सपत्नान्मे मन्थ मे पृतनायतः ।
मन्थ मे सर्वान्दुर्हार्दो मन्थ मे द्विषतो मणे ॥५॥
पिण्ढि दर्भ सपत्नान्मे पिण्ढि मे पृतनायतः ।
पिण्ढि मे सर्वान्दुर्हार्दः पिण्ढि मे द्विषतो मणे ॥६॥
ओष दर्भ सपत्नान्मे ओष मे पृतनायतः ।
ओष मे सर्वान्दुर्हार्द ओष मे द्विषतो मणे ॥७॥

तृन्द्धि । दर्भ । सऽपत्नान् । मे । तृन्द्धि । मे । पृतनाऽयतः ।
तृन्द्धि । मे । सर्वान् । दुःऽहार्दः । तृन्द्धि । मे । द्विषतः । मणे ॥ २ ॥
रुन्द्धि । दर्भ । सऽपत्नान् । मे । रुन्द्धि । मे । पृतनाऽयतः ।
रुन्द्धि । मे । सर्वान् । दुःऽहार्दः । रुन्द्धि । मे । द्विषतः । मणे ॥ ३ ॥
मृण । दर्भ । सऽपत्नान् । मे । मृण । मे । पृतनाऽयतः ।
मृण । मे । सर्वान् । दुःऽहार्दः । मृण । मे । द्विषतः । मणे ॥ ४ ॥
मन्थ । दर्भ । सऽपत्नान् । मे । मन्थ । मे । पृतनाऽयतः ।
मन्थ । मे । सर्वान् । दुःऽहार्दः । मन्थ । मे । द्विषतः । मणे ॥ ५ ॥
पिण्ड्ढि । दर्भ । सऽपत्नान् । मे । पिण्ड्ढि । मे । पृतनाऽयतः ।
पिण्ड्ढि । मे । सर्वान् । दुःऽहार्दः । पिण्ड्ढि । मे । द्विषतः । मणे ॥ ६ ॥
ओष । दर्भ । सऽपत्नान् । मे । ओष । मे । पृतनाऽयतः ।
ओष । मे । सर्वान् । दुःऽहार्दः । ओष । मे । द्विषतः । मणे ॥ ७ ॥

**XIX.29.2** Bore, O darbha, my rivals; bore them who invade me; bore all my enemies; O blessing, bore them who hate me.

**XIX.29.3** Obstruct, O darbha, my rivals; obstruct them who invade me, obstruct all my enemies; O blessing, obstruct them who hate me.

**XIX.29.4** Kill, O darbha, my rivals; kill them who invade me; kill all my enemies; O blessing, kill them who hate me.

**XIX.29.5** Churn, O darbha, my rivals; churn them who invade. me; churn all my enemies; O blessing, churn them who hate me.

**XIX.29.6** Crush, O darbha, my rivals; crush them who invade me, crush all my enemies; O blessing, crush them who hate me.

**XIX.29.7** Scorch, O darbha, my rivals; scorch them who invade me; scorch all my enemies; O blessing, scorch them who hate me.

दह दर्भ सपत्नान्मे दह मे पृतनायतः ।
दह मे सर्वान्दुर्हार्दो दह मे द्विषतो मणे ॥८॥
जहि दर्भ सपत्नान्मे जहि मे पृतनायतः ।
जहि मे सर्वान्दुर्हार्दो जहि मे द्विषतो मणे ॥९॥

दह । दर्भ । सऽपत्नान् । मे । दह । मे । पृतनाऽयतः ।
दह । मे । सर्वान् । दुःऽहार्दः । दह । मे । द्विषतः । मणे ॥ ८ ॥
जहि । दर्भ । सऽपत्नान् । मे । जहि । मे । पृतनाऽयतः ।
जहि । मे । सर्वान् । दुःऽहार्दः । जहि । मे । द्विषतः । मणे ॥ ९ ॥

( ३० ) त्रिंशं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । दर्भमणिर्देवता । अनुष्टुप् छन्दः ॥

यत्ते दर्भ जरामृत्युः शतं वर्मसु वर्म ते ।
तेनेमं वर्मिणं कृत्वा सपत्नाञ्जहि वीर्यैः ॥१॥
शतं ते दर्भ वर्माणि सहस्रं वीर्याणि ते ।
तमस्मै विश्वे त्वां देवा जरसे भर्तवा अदुः ॥२॥
त्वामाहुर्देववर्म त्वां दर्भ ब्रह्मणस्पतिम् ।
त्वामिन्द्रस्याहुर्वर्म त्वं राष्ट्राणि रक्षसि ॥३॥

यत् । ते । दर्भ । जराऽमृत्युः । शतम् । वर्मऽसु । वर्म । ते ।
तेन । इमम् । वर्मिणम् । कृत्वा । सऽपत्नान् । जहि । वीर्यैः ॥ १ ॥
शतम् । ते । दर्भ । वर्माणि । सहस्रम् । वीर्याणि । ते ।
तम् । अस्मै । विश्वे । त्वाम् । देवाः । जरसे । भर्तवै । अदुः ॥ २ ॥
त्वाम् । आहुः । देवऽवर्म । त्वाम् । दर्भ । ब्रह्मणः । पतिम् ।
त्वाम् । इन्द्रस्य । आहुः । वर्म । त्वम् । राष्ट्राणि । रक्षसि ॥ ३ ॥

**XIX.29.8** Burn, O darbha, my rivals to ashes; burn them to ashes who invade me; burn all my enemies to ashes; O blessing, burn them to ashes who hate me.

**XIX.29.9** Destroy, O darbha, my rivals; destroy them who invade me; destroy all my enemies; O blessing, destroy them who hate me.

### The darbha maṇi : for protection

**XIX.30.1** O darbha, with that armous, which is the best among a hundred armours of your, and which leads one to ripe old age before death, making this person well-armoured, destroy the rivals with your valours.

**XIX.30.2** A hundred are your armous; O darbha, and a thousand of valours. You, as such, all the bounties of Nature, have given to this person to support and lead him unto ripe old age.

**XIX.30.3** They call you the armour of the enlightened ones; they call you, O darbha, the Lord supreme. They call you the armour of the resplendent Lord. You protect kingdoms.

सपत्नक्षयणं दर्भ द्विषतस्तपनं हृदः ।
मणिं क्षत्रस्य वर्धनं तनूपानं कृणोमि ते ॥४॥
यत्समुद्रो अभ्यक्रन्दत्पर्जन्यो विद्युता सह ।
ततो हिरण्ययो बिन्दुस्ततो दर्भो अजायत ॥५॥

सपत्नऽक्षयणम् । दर्भ । द्विषतः । तपनम् । हृदः ।
मणिम् । क्षत्रस्य । वर्धनम् । तनूऽपानम् । कृणोमि । ते ॥ ४ ॥
यत् । समुद्रः । अभिऽअक्रन्दत् । पर्जन्यः । विऽद्युता । सह ।
ततः । हिरण्ययः । बिन्दुः । ततः । दर्भः । अजायत ॥ ५ ॥

## (३१) एकत्रिंशं सूक्तम्

(१-१४) चतुर्दशर्चस्यास्य सूक्तस्य सविता ऋषिः । औदुम्बरमणिर्देवता । (१-४, ७-१०) प्रथमादिचतसृणां सप्तम्यादिचतसृणाञ्चानुष्टुप्, (५, १२) पञ्चमीद्वादश्योस्त्रिष्टुप्, (६) षष्ठ्या विराट् प्रस्तारपङ्क्तिः, (११, १३) एकादशीत्रयोदश्योः पञ्चपदा शक्वरी, (१४) चतुर्दश्याश्च विराडास्तारपङ्क्तिश्छन्दांसि ॥

औदुम्बरेण मणिना पुष्टिकामाय वेधसा ।
पशूनां सर्वेषां स्फातिं गोष्ठे मे सविता करत् ॥१॥
यो नो अग्निर्गार्हपत्यः पशूनामधिपा असत् ।
औदुम्बरो वृषा मणिः सं मा सृजतु पुष्ट्या ॥२॥
करीषिणीं फलवतीं स्वधामिरां च नो गृहे ।
औदुम्बरस्य तेजसा धाता पुष्टिं दधातु मे ॥३॥

औदुम्बरेण । मणिना । पुष्टिऽकामाय । वेधसा ।
पशूनाम् । सर्वेषाम् । स्फातिम् । गोऽस्थे । मे । सविता । करत् ॥ १ ॥
यः । नः । अग्निः । गार्हऽपत्यः । पशूनाम् । अधिऽपाः । असत् ।
औदुम्बरः । वृषा । मणिः । सम् । मा । सृजतु । पुष्ट्या ॥ २ ॥
करीषिणीम् । फलऽवतीम् । स्वधाम् । इराम् । च । नः । गृहे ।
औदुम्बरस्य । तेजसा । धाता । पुष्टिम् । दधातु । मे ॥ ३ ॥

**XIX.30.4** Destroyer of rivals, O darbha, and burner of hater's heat, augmenter of ruling power, I make your blessing protector of my body.

**XIX.30.5** What time the ocean roared and the cloud thundered with the lightning, therefrom (came) the golden drop, and from that the darbha was born.

### Udumbara maṇi : For various blessings

**XIX.31.1** What the udumbara (ficus glemerata) blessing, prepared by an expert for one desiring prosperity, may the impeller Lord, make abundance of all cattle in my cow-stall.

**XIX.31.2** What is our house-holder's fire, may he be the lord of our cattle. May the potent udumbara blessing endow me with prosperity.

**XIX.31.3** By the power of the udumbara blessing, may the sustainer Lord grant me prosperity and a cow with plenty of dung (manure), calves and milk in our house.

यद्द्विपाच्च चतुष्पाच्च यान्यन्नानि ये रसाः ।
गृह्णेऽहं त्वेषां भूमानं बिभ्रदौदुम्बरं मणिम् ॥४॥
पुष्टिं पशूनां परि जग्रभाहं चतुष्पदां द्विपदां यच्च धान्यम् ।
पयः पशूनां रसमोषधीनां बृहस्पतिः सविता मे नि यच्छात् ॥५॥
अहं पशूनामधिपा असानि मयि पुष्टं पुष्टपतिर्दधातु ।
मह्यमौदुम्बरो मणिर्द्रविणानि नि यच्छतु ॥६॥
उप मौदुम्बरो मणिः प्रजया च धनेन च ।
इन्द्रेण जिन्वितो मणिरा मागन्त्सह वर्चसा ॥७॥
देवो मणिः सपत्नहा धनसा धनसातये ।
पशोरन्नस्य भूमानं गवां स्फातिं नि यच्छतु ॥८॥
यथाग्रे त्वं वनस्पते पुष्ट्या सह जज्ञिषे ।
एवा धनस्य मे स्फातिमा दधातु सरस्वती ॥९॥

यत् । द्विऽपात् । च । चतुःऽपात् । च । यानि । अन्नानि । ये । रसाः ।
गृह्णे । अहम् । तु । एषाम् । भूमानम् । बिभ्रत् । औदुम्बरम् । मणिम् ॥ ४ ॥
पुष्टिम् । पशूनाम् । परि । जग्रभ । अहम् । चतुःऽपदाम् । द्विऽपदाम् । यत् । च । धान्यम् ।
पयः । पशूनाम् । रसम् । ओषधीनाम् । बृहस्पतिः । सविता । मे । नि । यच्छात् ॥५॥
अहम् । पशूनाम् । अधिऽपाः । असानि । मयि । पुष्टम् । पुष्टऽपतिः । दधातु ।
मह्यम् । औदुम्बरः । मणिः । द्रविणानि । नि । यच्छतु ॥ ६ ॥
उप । मा । औदुम्बरः । मणिः । प्रऽजया । च । धनेन । च ।
इन्द्रेण । जिन्वितः । मणिः । आ । मा । अगन् । सह । वर्चसा ॥ ७ ॥
देवः । मणिः । सपत्नऽहा । धनऽसाः । धनऽसातये ।
पशोः । अन्नस्य । भूमानम् । गवाम् । स्फातिम् । नि । यच्छतु ॥ ८ ॥
यथा । अग्रे । त्वम् । वनस्पते । पुष्ट्या । सह । जज्ञिषे ।
एव । धनस्य । मे । स्फातिम् । आ । दधातु । सरस्वती ॥ ९ ॥

**XIX.31.4** Whatever is biped and quadruped, whatever the foods and whatever the delicious drinks are there, may I obtain plenty of them, putting on the udumbara blessing.

**XIX.31.5** I have obtained plenty of animals, both bipeds and quadrupeds, and that of food-grains. May the Lord supreme, the impeller Lord grant me the milk of cattle and the sap of plants.

**XIX.31.6** May I be the overlord of cattle; may the Lord of nourishment grant me nourishment. May the udumbara blessing bestow riches on me.

**XIX.31.7** The udumbara blessing has come to me along with progeny and wealth; a blessing urged by the resplendent Lord, it has come to me with lustre.

**XIX.31.8** May this divine blessing, destroyer of rivals and winner of wealth, grant me abundance of cattle and food as well as multiplication of cows for obtaining wealth.

**XIX.31.9** O Lord of forest, just as in the beginning, you were born with nourishment, so may the divine learning confer on me abundance of wealth.

आ मे धनं सरस्वती पयस्फातिं च धान्यम्।
सिनीवाल्युपा वहादयं चौदुम्बरो मणिः ॥१०॥
त्वं मणीनामधिपा वृषासि त्वयि पुष्टं पुष्टपतिर्जजान ।
त्वयीमे वाजा द्रविणानि सर्वौदुम्बरः स त्वमस्मत्सहस्वारादरातिमर्मतिं क्षुधं च ॥११॥
ग्रामणीरसि ग्रामणीरुत्थायाभिषिक्तोभि मा सिञ्च वर्चसा ।
तेजोसि तेजो मयि धारयाधि रयिरसि रयिं मे धेहि ॥१२॥
पुष्टिरसि पुष्टया मा समङ्ग्धि गृहमेधी गृहपतिं मा कृणु ।
औदुम्बरः स त्वमस्मासु धेहि रयिं च नः सर्ववीरं नि
यच्छ रायस्पोषाय प्रति मुञ्चे अहं त्वाम् ॥१३॥
अयमौदुम्बरो मणिर्वीरो वीराय बध्यते ।
स नः सनिं मधुमतीं कृणोतु रयिं च नः सर्ववीरं नि यच्छात् ॥१४॥

आ । मे । धनम् । सरस्वती । पयःऽस्फातिम् । च । धान्यम् ।
सिनीवाली । उप । आ । वहात् । अयम् । च । औदुम्बरः । मणिः ॥ १० ॥
त्वम् । मणीनाम् । अधिऽपाः । वृषा । असि । त्वयि । पुष्टम् । पुष्टऽपतिः । जजान ।
त्वयि । इमे इति (?) । वाजाः । द्रविणानि । सर्वा । औदुम्बरः । सः । त्वम् । अस्मत् ।
सहस्व । आरात् । अरातिम् । अमतिम् । क्षुधम् । च ॥ ११ ॥
ग्रामऽनीः । असि । ग्रामऽनीः । उत्थाय । अभिऽसिक्तः । अभि । मा । सिञ्च । वर्चसा ।
तेजः । असि । तेजः । मयि । धारय । अधि । रयिः । असि । रयिम् । मे । धेहि ॥१२॥
पुष्टिः । असि । पुष्टया । मा । सम् । अङ्ग्धि । गृहऽमेधी । गृहऽपतिम् । मा । कृणु ।
औदुम्बरः । सः । त्वम् । अस्मासु । धेहि । रयिम् । च । नः । सर्वऽवीरम् । नि ।
यच्छ । रायः । पोषाय । प्रति । मुञ्चे । अहम् । त्वाम् ॥ १३ ॥
अयम् । औदुम्बरः । मणिः । वीरः । वीराय । बध्यते । सः । नः । सनिम् ।
मधुऽमतीम् । कृणोतु । रयिम् । च । नः । सर्वऽवीरम् । नि । यच्छात् ॥ १४ ॥

**XIX.31.10** May the divine learning bring wealth, Sinīvāli (the new moon light) plenty of milk and this udumbara blessing food-grains for me.

**XIX.31.11** You are mighty overlord of blessings; the Lord of power has created power within you. Within you are all these foods and possessions. O udumbara blessing, may you overthrow niggardness, thoughtlessness and hunger far away from us.

**XIX.31.12** You are group-leader. Anointed as group-leader, rising up, may you anoint me with lustre. Majesty you are; maintain majesty in me; riches you are; bestow riches on me.

**XIX.31.13** You are power; anoint me with power. You are house-holder; make me the master of house. O udumbara blessing, as such, may you bestow riches on us and bless us with all brave sons. For plenty of riches, I accept (wear) you.

**XIX.31.14** This brave udumbara blessing is bound to the brave one. May it make our attainment full of sweetness and bestow on us riches with all brave sons.

( ३२ ) द्वात्रिंशं सूक्तम्

(१-१०) दशर्चस्यास्य सूक्तस्य भृगुर्ऋषिः । मन्त्रोक्ता देवता । (१-७) प्रथमादिसप्तर्चामनुष्टुप्, (८) अष्टम्याः पुरस्ताद्बृहती, (९) नवम्यास्त्रिष्टुप्, (१०) दशम्याश्च जगती छन्दांसि ॥

शतकाण्डो दुश्च्यवनः सहस्रपर्ण उत्तिरः ।
दर्भो य उग्र ओषधिस्तं ते बध्नाम्यायुषे ॥१॥

नास्य केशान्प्र वपन्ति नोरसि ताडमा घ्नते ।
यस्मा अच्छिन्नपर्णेन दर्भेण शर्म यच्छति ॥२॥

दिवि ते तूलमोषधे पृथिव्यामसि निष्ठितः ।
त्वया सहस्रकाण्डेनायुः प्र वर्धयामहे ॥३॥

तिस्रो दिवो अत्यतृणत्तिस्र इमाः पृथिवीरुत ।
त्वयाहं दुर्हार्दो जिह्वां नि तृणद्मि वचांसि ॥४॥

त्वमसि सहमानोहमस्मि सहस्वान् ।
उभौ सहस्वन्तौ भूत्वा सपत्नान्सहिषीमहि ॥५॥

सहस्व नो अभिमातिं सहस्व पृतनायतः ।
सहस्व सर्वान्दुर्हार्दः सुहार्दो मे बहून्कृधि ॥६॥

शतऽकाण्डः । दुःऽच्यवनः । सहस्रऽपर्णः । उत्ऽतिरः ।
दर्भः । यः । उग्रः । ओषधिः । तम् । ते । बध्नामि । आयुषे ॥ १ ॥

न । अस्य । केशान् । प्र । वपन्ति । न । उरसि । ताडम् । आ । घ्नते ।
यस्मै । अच्छिन्नऽपर्णेन । दर्भेण । शर्म । यच्छति ॥ २ ॥

दिवि । ते । तूलम् । ओषधे । पृथिव्याम् । असि । निऽस्थितः ।
त्वया । सहस्रऽकाण्डेन । आयुः । प्र । वर्धयामहे ॥ ३ ॥

तिस्रः । दिवः । अति । अतृणत् । तिस्रः । इमाः । पृथिवीः । उत ।
त्वया । अहम् । दुःऽहार्दः । जिह्वाम् । नि । तृणद्मि । वचांसि ॥ ४ ॥

त्वम् । असि । सहमानः । अहम् । अस्मि । सहस्वान् ।
उभौ । सहस्वन्तौ । भूत्वा । सऽपत्नान् । सहिषीवहि ॥ ५ ॥

सहस्व । नः । अभिऽमातिम् । सहस्व । पृतनाऽयतः ।
सहस्व । सर्वान् । दुःऽहार्दः । सुऽहार्दः । मे । बहून् । कृधि ॥ ६ ॥

## Darbha : For long life etc.

**XIX.32.1** Having hundreds of joints, and thousands of blades, difficult to remove, and up-growing darbha is a powerful remedy; that I bind on you for a long life-span.

**XIX.32.2** They do not pull at his hair, nor strike blows on his chest, to whom one affords comfort with darbha of uncut blades.

**XIX.32.3** O (darbha) plant, your tuft is in the sky; on the earth you are firmly set; with you of a thousand joints, we increase the life-span (of this person).

**XIX.32.4** You have pierced through the three heavens and also these earths; with you I split the tongue and the utterings of (my) ill-wisher.

**XIX.32.5** You are overpowering; I am full of overwhelming power; both of us, becoming overwhelmingly strong, will subdue our rivals.

**XIX.32.6** May you subdue him who assails us, subdue him who invades (us); subdue all my ill-wishers; make my well-wishers plentiful.

दुर्भेण देवजातेन दिवि ष्टम्भेन शश्वदित् ।
तेनाहं शश्वतो जनाँ असनं सनवानि च ॥७॥
प्रियं मा दर्भ कृणु ब्रह्मराजन्याभ्यां शूद्राय चार्याय च ।
यस्मै च कामयामहे सर्वस्मै च विपश्यते ॥८॥
यो जायमानः पृथिवीमदृंहद्यो अस्तभ्नादुन्तरिक्षं दिवं च ।
यं बिभ्रतं ननु पाप्मा विवेद स नोयं दुर्भो वरुणो दिवा कः ॥९॥
सपत्नहा शतकाण्डः सहस्वानोषधीनां प्रथमः सं बभूव ।
स नोयं दुर्भः परि पातु विश्वतस्तेन साक्षीय पृतनाः पृतन्यतः ॥१०॥

दुर्भेण । देवऽजातेन । दिवि । स्तम्भेन । शश्वत् । इत् ।
तेन । अहम् । शश्वतः । जनान् । असनम् । सनवानि । च ॥ ७ ॥
प्रियम् । मा । दर्भ । कृणु । ब्रह्मऽराजन्याभ्याम् । शूद्राय । च । आर्याय । च ।
यस्मै । च । कामयामहे । सर्वस्मै । च । विऽपश्यते ॥ ८ ॥
यः । जायमानः । पृथिवीम् । अदृंहत् । यः । अस्तभ्नात् । अन्तरिक्षम् । दिवम् । च ।
यम् । बिभ्रतम् । ननु । पाप्मा । विवेद । सः । नः । अयम् । दर्भः । वरुणः । दिवा । कः ॥ ९ ॥
सपत्नऽहा । शतऽकाण्डः । सहस्वान् । ओषधीनाम् । प्रथमः । सम् । बभूव ।
सः । नः । अयम । दर्भः । परि । पातु । विश्वतः । तेन । साक्षीय । पृतनाः । पृतन्यतः ॥१०॥

( ३३ ) त्रयस्त्रिंशं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्य भृगुर्ऋषिः । मन्त्रोक्ता देवता । (१) प्रथमर्चो जगती, (२, ५) द्वितीया-पञ्चम्योस्त्रिष्टुप्, (३) तृतीयाया आर्षी पङ्क्तिः, (४) चतुर्थ्याश्चास्तारपङ्क्तिश्छन्दांसि ॥

सहस्रार्घः शतकाण्डः पयस्वानपामग्निर्वीरुधां राजसूयम् ।
स नोयं दुर्भः परि पातु विश्वतो देवो मणिरायुषा सं सृजाति नः ॥१॥

सहस्रऽअर्घः । शतऽकाण्डः । पयस्वान् । अपाम् । अग्निः । वीरुधाम् । राजऽसूयम् । सः ।
नः । अयम् । दर्भः । परि । पातु । विश्वतः । देवः । मणिः । आयुषा । सम् । सृजाति । नः ॥

**XIX.32.7** With the darbha, born of the bounties of Nature and ever upholder of the sky, I have always won men and may I win them (in future).

**XIX.32.8** O darbha, may you make me pleasing to the intellectuals and the warrior-administrators, to the employees as well as the employers; to him, who desire, and to every one who discerns.

**XIX.32.9** Who, as soon as born, made the earth firmly set and who supported the midspace and the sky (in their places); him, who wears it, evil never reaches; may that darbha here be our shelter (dharuṇah) and supporter (adivākaḥ).

**XIX.32.10** Destroyer of rivals, having hundreds of joints, full of overwhelming power, (the darbha) was born first of all plants. So may this darbha protect us all around. With this may I defeat the armies of the invader.

### Darbha : The divine blessing

**XIX.33.1** Worth a thousand, having hundreds of joints, rich in sap, fire of the waters, and crowing of the plants, may this darbha as such protect us well all around. May this divine blessing endow us with a long life-span.

घृतादुल्लुप्तो मधुमान्पयस्वान्भूमिदृंहोच्युतश्च्यावयिष्णुः ।
नुदन्त्सपत्नानधरांश्च कृण्वन्दर्भा रोह महतामिन्द्रियेण ॥२॥
त्वं भूमिमत्येष्योजसा त्वं वेद्यां सीदसि चारुरध्वरे ।
त्वां पवित्रमृषयोभरन्त त्वं पुनीहि दुरितान्यस्मत् ॥३॥
तीक्ष्णो राजा विषासही रक्षोहा विश्वचर्षणिः ।
ओजो देवानां बलमुग्रमेतत्तं ते बध्नामि जरसे स्वस्तये ॥४॥
दर्भेण त्वं कृणवद्वीर्याऽणि दर्भं बिभ्रदात्मना मा व्यथिष्ठाः ।
अतिष्ठाया वर्चसाधान्यान्त्सूर्य इवा भाहि प्रदिशश्चतस्रः ॥५॥

घृतात् । उत्ऽलुप्तः । मधुऽमान् । पयस्वान् । भूमिऽदृंहः । अच्युतः । च्यवयिष्णुः ।
नुदन् । सऽपत्नान् । अधरान् । च । कृण्वन् । दर्भ । आ । रोह । महताम् । इन्द्रियेण ॥
त्वम् । भूमिम् । अति । एषि । ओजसा । त्वम् । वेद्याम् । सीदसि । चारुः । अध्वरे ।
त्वाम् । पवित्रम् । ऋषयः । अभरन्त । त्वम् । पुनीहि । दुःऽइतानि । अस्मत् ॥ ३ ॥
तीक्ष्णः । राजा । विऽससहिः । रक्षःऽहा । विश्वऽचर्षणिः ।
ओजः । देवानाम् । बलम् । उग्रम् । एतत् । तम् । ते । बध्नामि । जरसे । स्वस्तये ॥ ४ ॥
दर्भेण । त्वम् । कृणवत् । वीर्याऽणि । दर्भम् । बिभ्रत् । आत्मना । मा । व्यथिष्ठाः ।
अतिऽस्थाय । वर्चसा । अध । अन्यान् । सूर्यःऽइव । आ । भाहि । प्रऽदिशः । चतस्रः ॥

( ३४ ) चतुस्त्रिंशं सूक्तम्

(१-१०) दशर्चस्यास्य सूक्तस्याङ्गिरा ऋषिः । मन्त्रोक्ता वनस्पतिर्देवता । अनुष्टुप् छन्दः ॥

जङ्गिडोऽसि जङ्गिडो रक्षितासि जङ्गिडः ।
द्विपाच्चतुष्पादस्माकं सर्वं रक्षतु जङ्गिडः ॥१॥

जङ्गिडः । असि । जङ्गिडः । रक्षिता । असि । जङ्गिडः ।
द्विऽपात् । चतुःऽपात् । अस्माकम् । सर्वम् । रक्षतु । जङ्गिडः ॥ १ ॥

**XIX.33.2** Besmeared with clarified butter, rich in sweetness and rich in sap, making the earth firm, unshaken and shaker of others, driving away the rivals and subjugating them, O darbha, may you ascend up with the effulgence of the mighty ones.

**XIX.33.3** You overtake the earth with vigour; at the sacrifice, you sit beautiful on the altar; the seers put on you, the purifier; may you cleanse evils away from us.

**XIX.33.4** Sharp, shining, subduer, killer of injurious germs, observer of all, vigour of the bounties of Nature, this darbha is a formidable power; that I bind on you for a ripe old age and weal.

**XIX.33.5** Perform valorous deed with the darbha; putting darbha on you, may you never suffer any pain; then surpassing others with lustre, may you shine like the sun in the four regions.

## The Jañgiḍā plant : For protection

**XIX.34.1** O jañgiḍa, you are devourer of evil plotters. You are a protector, O jañgiḍa. May the jañgiḍa protect our all the bipeds and the quadrupeds.

या गृत्स्यस्त्रिपञ्चाशीः शतं कृत्याकृतश्च ये ।
सर्वान्विनक्तु तेजसोरसां जङ्गिडस्करत् ॥२॥
अरसं कृत्रिमं नादमरसाः सप्त विस्रसः ।
अपेतो जङ्गिडामतिमिषुमस्तेव शातय ॥३॥
कृत्यादूषण एवायमथो अरातिदूषणः ।
अथो सहस्वां जङ्गिडः प्र ण आयूंषि तारिषत् ॥४॥
स जङ्गिडस्य महिमा परि णः पातु विश्वतः ।
विष्कन्धं येन सासह संस्कन्धमोज ओजसा ॥५॥
त्रिष्ट्वा देवा अजनयन्निष्ठितं भूम्यामधि ।
तमु त्वाङ्गिरा इति ब्राह्मणाः पूर्व्या विदुः ॥६॥
न त्वा पूर्वा ओषधयो न त्वा तरन्ति या नवाः ।
विबाध उग्रो जङ्गिडः परिपाणः सुमङ्गलः ॥७॥

याः । गृत्स्यः । त्रिऽपञ्चाशीः । शतम् । कृत्याऽकृतः । च । ये ।
सर्वान् । विनक्तु । तेजसः । अरसान् । जङ्गिडः । करत् ॥ २ ॥
अरसम् । कृत्रिमम् । नादम् । अरसाः । सप्त । विऽस्रसः ।
अप । इतः । जङ्गिड । अमतिम् । इषुम् । अस्ताऽइव । शातय ॥ ३ ॥
कृत्याऽदूषणः । एव । अयम् । अथो इति । अरातिऽदूषणः ।
अथो इति । सहस्वान् । जाङ्गिडः । प्र । नः । आयूंषि । तारिषत् ॥ ४ ॥
सः । जङ्गिडस्य । महिमा । परि । नः । पातु । विश्वतः ॥ ५ ॥
विऽस्कन्धम् । येन । ससह । सम्ऽस्कन्धम् । ओजः । ओजसा ॥ ५ ॥
त्रिः । त्वा । देवाः । अजनयन् । निऽस्थितम् । भूम्याम् । अधि ।
तम् । ऊं इति । त्वा । अङ्गिराः । इति । ब्राह्मणाः । पूर्व्याः । विदुः ॥ ६ ॥
न । त्वा । पूर्वाः । ओषधयः । न । त्वा । तरन्ति । याः । नवाः ।
विऽबाधः । उग्रः । जङ्गिडः । परिऽपानः । सुऽमङ्गलः ॥ ७ ॥

**XIX.34.2** What fifty-three greedy plotters are there and hundreds of the evil device-makers, may the jañgiḍa deprive them of their power and make them impotent.

**XIX.34.3** Unpleasant artificial noise, and unpleasant seven discharges, and the thoughtlessness - them O jañgiḍa, may You throw away just as an archer shoots an arrow.

**XIX.34.4** This is indeed, a counterer of evil devices, and also counterer of enemies. Now, may the overpowering jañgiḍa, extend our life-spans.

**XIX.34.5** May such great power of the jañgiḍe protect us all around, wherewith it overcomes viṣkandha (splitting pain in shoulders) and intense sanskandha (curing in the shoulders) with its might.

**XIX.34.6** Thrice the bounties of Nature created you well set on the earth; the intellectuals of old knew that you are Añgiras (by name).

**XIX.34.7** Not the ancient plants, nor those of recent origin surpass you; strong resister and formidable jañgiḍa is an auspicious and effective defence.

अथौपदान भगवो जङ्गिडामितवीर्य ।
पुरा त उग्रा ग्रसत उपेन्द्रो वीर्यं ददौ ॥८॥
उग्र इत्ते वनस्पत इन्द्र ओज्मानमा दधौ ।
अमीवाः सर्वाश्चातयं जहि रक्षांस्योषधे ॥९॥
आशरीकं विशरीकं बलासं पृष्ट्यामयम् ।
तक्मानं विश्वशारदमरसां जङ्गिडस्करत् ॥१०॥

अथ । उपऽदान । भगऽवः । जाङ्गिड । अमितऽवीर्य ।
पुरा । ते । उग्राः । ग्रसते । उप । इन्द्रः । वीर्यम् । ददौ ॥ ८ ॥
उग्रः । इत् । ते । वनस्पते । इन्द्रः । ओज्मानम् । आ । दधौ ।
अमीवाः । सर्वाः । चातयन् । जहि । रक्षांसि । ओषधे ॥ ९ ॥
आऽशरीकम् । विऽशरीकम् । बलासम् । पृष्टिऽआमयम् ।
तक्मानम् । विश्वऽशारदम । अरसान् । जङ्गिडः । करत् ॥ १० ॥

( ३५ ) पञ्चत्रिंशं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्याङ्गिरा ऋषिः । मन्त्रोक्ता वनस्पतिर्देवता । (१–२, ५) प्रथमाद्वितीया-पञ्चमीनामृचामनुष्टुप्, (३) तृतीयायाः पथ्यापङ्क्तिः, (४) चतुर्थ्याश्च निचृत्त्रिष्टुप् छन्दांसि ॥

इन्द्रस्य नाम गृह्णन्त ऋषयो जङ्गिडं ददुः ।
देवा यं चक्रुर्भेषजमग्रे विष्कन्धदूषणम् ॥१॥
स नो रक्षतु जङ्गिडो धनपालो धनेव ।
देवा यं चक्रुर्ब्राह्मणाः परिपाणमरातिहम् ॥२॥

इन्द्रस्य । नाम । गृह्णन्तः । ऋषयः । जङ्गिडम् । ददुः ।
देवाः । यम् । चक्रुः । भेषजम । अग्रे । विस्कन्धऽदूषणम् ॥ १ ॥
स । नः । रक्षतु । जङ्गिडः । धनऽपालः । धनाऽइव ।
देवाः । यम् । चक्रुः । ब्राह्मणाः । परिऽपानम् । अरातिऽहम् ॥ २ ॥

**XIX.34.8** O bounteous jañgiḍa of immeasurable strength, at the time of your coming to life, the resplendent Lord put great power in you in the very beginning, so that the formidable ones may not favour you.

**XIX.34.9** O Lord of forest, the resplendent Lord, indeed, has put in you formidable power; thrusting away all maladies, may you destroy injurious germs, O herb.

**XIX.34.10** May the jañgiḍa make powerless the crushing pain (lumbago), the bursting pain (artheritis), consumptive cough, and the disease of the ribs (pleurisy), and the fever coming every autumn.

## The Jañgiḍa : For protection

**XIX.35.1** Uttering the name of the resplendent Lord, the seers have given the jañgiḍa, which in the former times, the enlightened ones made a remedy, remover of splitting pain in shoulders (viṣkandha).

**XIX.35.2** May that jañgiḍa, which the enlightened ones and the intellectuals have made a perfect defence, the destroyer of enemies, protect us, just as a treasure-guard guards the treasure.

दुर्हार्दः संघोरं चक्षुः पापकृत्वानमागमम् ।
तांस्त्वं सहस्रचक्षो प्रतीबोधेन नाशय परिपाणोसि जङ्गिडः ॥३॥
परि मा दिवः परि मा पृथिव्याः पर्यन्तरिक्षात्परि मा वीरुद्भ्यः ।
परि मा भूतात्परि मोत भव्याद्दिशोदिशो जङ्गिडः पात्वस्मान् ॥४॥
य ऋष्णवो देवकृता य उतो ववृतेन्यः ।
सर्वांस्तान्विश्वभेषजोरसां जङ्गिडस्करत् ॥५॥

दुःऽहार्दः । सम्ऽघोरम् । चक्षुः । पापऽकृत्वानम् । आ । अगमम् । तान् । त्वम् । सहस्रचक्षो इति सहस्रऽचक्षो । प्रतिऽबोधेन । नाशय । परिऽपानः । असि । जङ्गिडः ॥ ३ ॥

परि । मा । दिवः । परि । मा । पृथिव्याः । परि । अन्तरिक्षात् । परि । मा । वीरुत्ऽभ्यः ।
परि । मा । भूतात् । परि । मा । उत । भव्यात् । दिशःऽदिशः । जङ्गिडः । पातु । अस्मान् ॥४॥

ये । ऋष्णवः । देवऽकृताः । यः । उतो इति । ववृते । अन्यः ।
सर्वान् । तान् । विश्वऽभेषजः । अरसान् । जङ्गिडः । करत् ॥ ५ ॥

## ( ३६ ) षट्त्रिंशं सूक्तम्

(१-६) षडृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । शतवारो देवता । अनुष्टुप् छन्दः ॥

शतवारो अनीनशद्यक्ष्मान्रक्षांसि तेजसा ।
आरोहन्वर्चसा सह मणिर्दुर्णामचातनः ॥१॥
शृङ्गाभ्यां रक्षो नुदते मूलेन यातुधान्यः ।
मध्येन यक्ष्मं बाधते नैनं पाप्माति तत्रति ॥२॥

शतऽवारः । अनीनशत् । यक्ष्मान् । रक्षांसि । तेजसा ।
आऽरोहन् । वर्चसा । सह । मणिः । दुर्नामऽचातनः ॥ १ ॥

शृङ्गाभ्याम् । रक्षः । नुदते । मूलेन । यातुऽधान्यः ।
मध्येन । यक्ष्मम् । बाधते । न । एनम् । पाप्मा । अति । तत्रति ॥ २ ॥

**XIX.35.3** The cruel eye of the enemy, and the would-be-murderer that has come to us - O thousand-eyed one, may you destroy them carefully; O jañgiḍa, you are a sure defence.

**XIX.35.4** Me from sky, me from earth, me from midspace, me from plants, me from the present, and me from the future, from each and every quarter, may the jañgiḍa protect us all around.

**XIX.35.5** Whatever harmful acts are there perpetrated by the enlightened ones, and whatever other than these are there, may this all-cure jañgiḍa make them all powerless.

### The Śatavāra Blessings

**XIX.36.1** The śatavāra (hundred-fold preventer) banquishes wasting diseases and injurious germs with it power. Mounting with lustre, this blessing ṛemoves ill-named maladies.

**XIX.36.2** With its two horns it thrusts away the injurious germs, wit its base the painful viruses, and with its middle part it removes the wasting disease. No malady escapes from it.

ये यक्ष्मासो अर्भका महान्तो ये च शब्दिनः ।
सर्वान्दुर्णामहा मणिः शतवारो अनीनशत् ॥३॥
शतं वीरानजनयच्छतं यक्ष्मानपावपत् ।
दुर्णाम्नः सर्वान्हत्वाव रक्षांसि धूनुते ॥४॥
हिरण्यशृङ्ग ऋषभः शातवारो अयं मणिः ।
दुर्णाम्नः सर्वांस्तृढ्वाव रक्षांस्यक्रमीत् ॥५॥
शतमहं दुर्णाम्नीनां गन्धर्वाप्सरसां शतम् । शतं शश्वन्वतीनां शतवारेण वारये ॥६॥

ये । यक्ष्मासः । अर्भकाः । महान्तः । ये । च । शब्दिनः ।
सर्वान् । दुर्नामऽहा । मणिः । शतऽवारः । अनीनशत् ॥ ३ ॥
शतम् । वीरान् । अजनयत् । शतम् । यक्ष्मान् । अप । अवपत् ।
दुःऽनाम्नः । सर्वान् । हत्वा । अव । रक्षांसि । धूनुते ॥ ४ ॥
हिरण्यऽशृङ्गः । ऋषभः । शातऽवारः । अयम् । मणिः ।
दुःऽनाम्नः । सर्वान् । तृढ्वा । अव । रक्षांसि । अक्रमीत् ॥ ५ ॥
शतम् । अहम् । दुःऽनाम्नीनाम् । गन्धर्वऽअप्सरसाम् । शतम् ।
शतम् । शश्वन्ऽवतीनाम । शतऽवारेण । वारये ॥ ६ ॥

( ३७ ) सप्तत्रिंशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । अग्निर्देवता । (१) प्रथमर्चस्त्रिष्टुप्, (२) द्वितीयाया आस्तारपङ्क्तिः, (३) तृतीयायास्त्रिपदा महाबृहती, (४) चतुर्थ्याश्च पुर उष्णिक् छन्दांसि ॥

इदं वर्चो अग्निना दत्तमागन्भर्गो यशः सह ओजो वयो बलम् ।
त्रयस्त्रिंशद्यानि च वीर्याणि तान्यग्निः प्र ददातु मे ॥१॥

इदम् । वर्चः । अग्निना । दत्तम् । आ । अगन् । भर्गः । यशः । सहः । ओजः । वयः ।
बलम् । त्रयःऽत्रिंशत् । यानि । च । वीर्याणि । तानि । अग्निः । प्र । ददातु । मे ॥ १ ॥

**XIX.36.3** The wasting diseases, which are newly-born and those ones, which make much noise, all of them the śatavāra blessing, killer of ill-named maladies, banquished away.

**XIX.36.4** A hundred brave sons it does produce; a hundred wasting diseases it does destroy; smiting all the ill-named maladies, it shakes away the injurious germs.

**XIX.36.5** This śatavāra blessing is just a golden-horned bull. Having smitten all the ill-named maladies, it attacks the injurious germs.

**XIX.36.6** Hundreds of ill-named maladies, hundreds of germs living soil (gandharva) and those living in waters (apsaras), and hundreds of recurring painful diseases I prevent with the śatavāra (blessing).

**Agni**

**XIX.37.1** This lustre, assigned by the adorable Lord, has come (to me); may the adorable Lord bestow upon me effulgence, fame, overwhelming force, vigour, ling life, strength and the thirty-three manly powers that are there.

वर्च आ धेहि मे तन्वां सह ओजो वयो बलम् ।
इन्द्रियाय त्वा कर्मणे वीर्याय प्रति गृह्णामि शतशारदाय ॥२॥
ऊर्जे त्वा बलाय त्वौजसे सहसे त्वा ।
अभिभूयाय त्वा राष्ट्रभृत्याय पर्यूहामि शतशारदाय ॥३॥
ऋतुभिष्ट्वार्तवैरायुषे वर्चसे त्वा ।
संवत्सरस्य तेजसा तेन संहनु कृण्मसि ॥४॥

वर्चः । आ । धेहि । मे । तन्वाम् । सह । ओजः । वयः । बलम् ।
इन्द्रियाय । त्वा । कर्मणे । वीर्याय । प्रति । गृह्णामि । शतऽशारदाय ॥ २ ॥
ऊर्जे । त्वा । बलाय । त्वा । ओजसे । सहसे । त्वा ।
अभिऽभूयाय । त्वा । राष्ट्रऽभृत्याय । परि । ऊहामि । शतऽशारदाय ॥ ३ ॥
ऋतुऽभ्यः । त्वा । आर्तवेभ्यः । मातृऽभ्यः । समऽवत्सरेभ्यः ।
धात्रे । विऽधात्रे । समऽऋधे । भूतस्य । पतये । यजे ॥ ४ ॥

( ३८ ) अष्टात्रिंशं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । गुग्गुलुर्देवता । (१) प्रथमर्चोऽनुष्टुप्, (२) द्वितीयायाश्चतुष्पदोष्णिक्, (३) तृतीयायाश्चैकावसाना प्राजापत्यानुष्टुप् छन्दांसि ॥

न तं यक्ष्मा अरुन्धते नैनं शपथो अश्नुते ।
यं भेषजस्य गुल्गुलोः सुरभिर्गन्धो अश्नुते ॥१॥
विष्वञ्चस्तस्माद्यक्ष्मा मृगा अश्वा इवेरते ।
यद्गुल्गुलु सैन्धवं यद्वाप्यासि समुद्रियम् ॥२॥
उभयोरग्रभं नामास्मा अरिष्टतातये ॥३॥

न । तम् । यक्ष्माः । अरुन्धते । न । एनम् । शपथः । अश्नुते ।
यम् । भेषजस्य । गुल्गुलोः । सुरभिः । गन्धः । अश्नुते ॥ १ ॥
विष्वञ्चः । तस्मात् । यक्ष्माः । मृगाः । अश्वाःऽइव । ईरते ।
यत् । गुल्गुलु । सैन्धवम् । यत् । वा । अपि । असि । समुद्रियम् ॥ २ ॥
उभयोः । अग्रभम् । नाम । अस्मै । अरिष्टऽतातये ॥ ३ ॥

**XIX.37.2** May you put lustre in my body and also overwhelming power, vigour, long life and strength. I adopt you for resplendent action and valour lasting through a hundred autumns.

**XIX.37.3** You for vigour, you for strength, you for might and overwhelming power, you for conquest and sustenance of kingdom for a hundred autumns, do I adopt.

**XIX.37.4** I adopt you for the sake of the seasons and season-groups, for months and years, for the sustainer and the creator, for the enricher and the Lord of all existence.

## The Guggulu : against disease

**XIX.38.1** Wasting diseases obstruct him not, nor the curses affect him, whom the fragrant smell of the healing guggulu (bdellium) penetrates.

**XIX.38.2** Away from it scatter all the wasting diseases like fast-fleeing antelopes; O guggulu, even if you are (procured) from a river, or if you are from the sea.

**XIX.38.3** I have mentioned the name of both for curing (the malady of) this person.

( ३९ ) एकोनचत्वारिंशं सूक्तम्

(१-१०) दशर्चस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । कुष्ठो देवता । (१, ९-१०) प्रथमानवमीदशमीनामृचामनुष्टुप्, (२-३) द्वितीयातृतीययोस्त्र्यवसाना पथ्यापङ्क्तिः, (४) चतुर्थ्याः षट्पदा जगती, (५) पञ्चम्याश्चतुरवसाना सप्तपदा शक्वरी, (६-८) षष्ठ्यादितृचस्य च चतुरवसानाष्टपदाष्टिश्छन्दांसि ॥

ऐतु देवस्त्रायमाणः कुष्ठो हिमवतस्परि । तक्मानं सर्वं नाशय सर्वाश्च यातुधान्यः ॥१॥

त्रीणि ते कुष्ठ नामानि नद्यमारो नद्यारिषः । नद्यायं पुरुषो रिषत् ।
यस्मै परिब्रवीमि त्वा सायंप्रातरथो दिवा ॥२॥

जीवला नाम ते माता जीवन्तो नाम ते पिता । नद्यायं पुरुषो रिषत् ।
यस्मै परिब्रवीमि त्वा सायंप्रातरथो दिवा ॥३॥

उत्तमो अस्योषधीनामनड्वाञ्जगतामिव व्याघ्रः श्वपदामिव ।
नद्यायं पुरुषो रिषत् । यस्मै परिब्रवीमि त्वा सायंप्रातरथो दिवा ॥४॥

त्रिः शाम्बुभ्यो अङ्गिरेभ्यस्त्रिरादित्येभ्यस्परि । त्रिर्जातो विश्वदेवेभ्यः ।
स कुष्ठो विश्वभेषजः साकं सोमेन तिष्ठति ।
तक्मानं सर्वं नाशय सर्वाश्च यातुधान्यः ॥५॥

आ । एतु । देवः । त्रायमाणः । कुष्ठः । हिमऽवतः । परि ।
तक्मानम् । सर्वम् । नाशय । सर्वाः । च । यातुऽधान्यः ॥ १ ॥

त्रीणि । ते । कुष्ठ । नामानि । नद्यऽमारः । नद्यऽरिषः । नद्य । अयम् । पुरुषः । रिषत् ।
यस्मै । परिऽब्रवीमि । त्वा । सायम्ऽप्रातः । अथो इति । दिवा ॥ २ ॥

जीवला । नाम । ते । माता । जीवन्तः । नाम । ते । पिता । नद्य । अयम् । पुरुषः । रिषत् ।
यस्मै । परिऽब्रवीमि । त्वा । सायम्ऽप्रातः । अथो इति । दिवा ॥ ३ ॥

उत्ऽतमः । असि । ओषधीनाम् । अनड्वान् । जगताम्ऽइव । व्याघ्रः । श्वपदाम्ऽइव । नद्य ।
अयम् । पुरुषः । रिषत् । यस्मै । परिऽब्रवीमि । त्वा । सायम्ऽप्रातः । अथो इति । दिवा ॥४॥

त्रिः । शाम्बुऽभ्यः । अङ्गिरेभ्यः । त्रिः । आदित्येभ्यः । परि । त्रिः । जातः । विश्वऽदेवेभ्यः ।
सः । कुष्ठः । विश्वऽभेषजः । साकम् । सोमेन । तिष्ठति ।
तक्मानम् । सर्वम् । नाशय । सर्वाः । च । यातुऽधान्यः ॥ ५ ॥

## The Kuṣṭha

**XIX.39.1** May the dive kuṣtha (costus specious) come protectory from the snowy mountain. Banish all the fever and all the painful diseases.

**XIX.39.2** O kuṣṭha, three are your names-- nadya-māra and nadyāriṣa (never killing and never harming). Let this man, for whom I prescribe you every evening, morning and also by days come to no harm.

**XIX.39.3** Jivalā (life-giving) by name is your mother; Jīvanta (life saver) by name is your father. Let this man, for whom I prescribe you every evening, morning and also by day; come to no harm.

**XIX.39.4** You are most excellent among herbs, just as the bullock among cattle and the tiger among carnivora. Let not this man, for whom I prescribe you every, morning and also by day, come to no harm.

**XIX.39.5** Born thrice from brilliant śāmbus (bivalve shells), thrice from the suns, and born thrice from all the bounties of Nature, thất kuṣṭha is an all-cure remedy. It contains the curing principle. May you banish all the fever and all the painful diseases.

अश्वत्थो देवसदनस्तृतीयस्यामितो दिवि। तत्रामृतस्य चक्षणं ततः कुष्ठो अजायत।
स कुष्ठो विश्वभेषजः साकं सोमेन तिष्ठति ।
तक्मानं सर्वं नाशय सर्वाश्च यातुधान्यः ॥६॥

हिरण्ययी नौरचरद्धिरण्यबन्धना दिवि। तत्रामृतस्य चक्षणं ततः कुष्ठो अजायत।
स कुष्ठो विश्वभेषजः साकं सोमेन तिष्ठति ।
तक्मानं सर्वं नाशय सर्वाश्च यातुधान्यः ॥७॥

यत्र नावप्रभ्रंशनं यत्र हिमवतः शिरः। तत्रामृतस्य चक्षणं ततः कुष्ठो अजायत।
स कुष्ठो विश्वभेषजः साकं सोमेन तिष्ठति।
तक्मानं सर्वं नाशय सर्वाश्च यातुधान्यः ॥८॥

यं त्वा वेद पूर्व इक्ष्वाको यं वा त्वा कुष्ठ काम्यः।
यं वा वसो यमात्स्यस्तेनासि विश्वभेषजः ॥९॥

अश्वत्थः। देवऽसदनः। तृतीयस्याम्। इतः। दिवि।
तत्र। अमृतस्य। चक्षणम्। ततः। कुष्ठः। अजायत।
सः। कुष्ठः। विश्वऽभेषजः। साकम्। सोमेन। तिष्ठति।
तक्मानम्। सर्वम्। नाशय। सर्वाः। च। यातुऽधान्यः॥ ६॥

हिरण्ययी। नौः। अचरत्। हिरण्यऽबन्धना। दिवि।
तत्र। अमृतस्य। चक्षणम्। ततः। कुष्ठः। अजायत।
सः। कुष्ठः। विश्वऽभेषजः। साकम्। सोमेन। तिष्ठति।
तक्मानम्। सर्वम्। नाशय। सर्वाः। च। यातुऽधान्यः॥ ७॥

यत्र। न। अवऽप्रभ्रंशनम्। यत्र। हिमऽवतः। शिरः।
तत्र। अमृतस्य।। चक्षणम्। ततः। कुष्ठः। अजायत।
सः। कुष्ठः। विश्वऽभेषजः। साकम्। सोमेन। तिष्ठति।
तक्मानम्। सर्वम्। नाशय। सर्वाः। च। यातुऽधान्यः॥ ८॥

यम्। त्वा। वेद। पूर्वः। इक्ष्वाकः। यम्। वा। त्वा। कुष्ठ। काम्यः।
यम्। वा। वसः। यम्। आत्स्यः। तेन। असि। विश्वऽभेषजः॥ ९॥

**XIX.39.6** In the third heaven from here, there is the aśvattha (the holy fig tree, ficus religiosa) tree, the seat of the enlightened ones. There is the source of immortality. Therefrom the kuṣṭha is born. That kuṣṭha is an all-cure remedy. It contains the curing principle. May you banish all the fever and all the painful diseases. (Av.V.4.3.Vari.)

**XIX.39.7** There moves a golden boat with golden tackle in heaven. There is the source of immortality. Therefrom the kuṣṭha is born. That Kuṣṭha is an all-cure remedy. It contains the curing principle. May you banish all the fever and all the painful diseases. (Av.V.4.4.Vari.)

**XIX.39.8** Where there is no slipping downwards, and where there is the summit of the snowy mountain (Himalaya), there is the source of immortality, Therefrom the kuṣṭha is born. That kuṣṭha is an all-cure remedy. It contains the curing principle. May you banish all the fever and all the painful diseases.

**XIX.39.9** You, O kuṣṭha, whom the sugar-cane eater knew previously, or whom the sensual one know, or whom the one of sedentary habits or whom the gourmand knew, so you are a panacea (all-cure-remedy).

शीर्षलोकं तृतीयकं सदुन्दिर्यश्च हायनः ।
तक्मानं विश्वधावीर्याधराञ्चं परा सुव ॥१०॥

शीर्षऽशोकम् । तृतीयकम् । सदम्ऽदिः । यः । च । हायनः ।
तक्मानम् । विश्वधाऽवीर्य । अधराञ्चम् । । परा । सुव ॥ १० ॥

( ४० ) चत्वारिंशं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । बृहस्पतिर्विश्वे देवा वा देवताः । (१) प्रथमर्चः परानुष्टुप्त्रिष्टुप्, (२) द्वितीयायाः पुरःककुम्मत्युपरिष्टाद्बृहती, (३) तृतीयाया बृहतीगर्भा-नुष्टुप्, (४) चतुर्थ्याश्च त्रिपदार्षी गायत्री छन्दांसि ॥

यन्मे छिद्रं मनसो यच्च वाचः सरस्वती मन्युमन्तं जगाम ।
विश्वैस्तद्देवैः सह संविदानः सं दधातु बृहस्पतिः ॥१॥
मा न आपो मेधां मा ब्रह्म प्र मथिष्टन ।
शुष्यदा यूयं स्यन्दध्वमुपहूतोहं सुमेधा वर्चस्वी ॥२॥
मा नो मेधां मा नो दीक्षां मा नो हिंसिष्टं यत्तपः ।
शिवा नः शं सन्त्वायुषे शिवा भवन्तु मातरः ॥३॥
मा नः पीपरदश्विना ज्योतिष्मती तमस्तिरः ।
तामस्मे रासतामिषम् ॥४॥

यत् । मे । छिद्रम् । मनसः । यत् । च । वाचः । सरस्वती । मन्युऽमन्तम् । जगाम ।
विश्वैः । तत् । देवैः । सह । सम्ऽविदानः । सम् । दधातु । बृहस्पतिः ॥ १ ॥
मा । नः । आपः । मेधाम् । मा । ब्रह्म । प्र । मथिष्टन ।
सुऽस्यदाः । यूयम् । स्यन्दध्वम् । उपऽहूतः । अहम् । सुऽमेधाः । वर्चस्वी ॥२॥
मा । नः । मेधाम् । मा । नः । दीक्षाम् । मा । नः । हिंसिष्टम् । यत् । तपः ।
शिवाः । नः । शम् । सन्तु । आयुषे । शिवाः । भवन्तु । मातरः ॥ ३ ॥
या । नः । पीपरत् । अश्विना । ज्योतिष्मती । तमः । तिरः । ताम् । अस्मे इति ।
रासताम् । इषम् ॥ ४ ॥

**XIX.39.10** (Fever) causing severe headache, the tertian, the constant one, and the one that comes every year - all that fever, O all- potent (Kuṣṭha), may you drive away downwards.

**To divinities : For blessings**

**XIX.40.1** Whatever fault is there in my mind and in my speech, which has offend the divine learning, may the Lord supreme, in accord with all the bounties of Nature, rectify that (fault).

**XIX.40.2** O elemental waters, may you not crush our intelligence, nor our sacred knowledge. May you of easy flow, come on flowing. Favoured by you, may I become intelligent and lustrous.

**XIX.40.3** May you not injure our intelligence, nor our conservation, nor what is our austerity. May they, the gracious, recommend us for a long life; may they be gracious mother to us.

**XIX.40.4** Grant us, O twins-divine, that food, which, full of light and seatherer of darkness, will sustain us.

### ( ४१ ) एकचत्वारिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । तपो देवता । त्रिष्टुप् छन्दः ॥

भद्रमिच्छन्त ऋषयः स्वर्विदुस्तपो दीक्षामुपनिषेदुरग्रे ।
ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसंनमन्तु ॥१॥

भद्रम् । इच्छन्तः । ऋषयः । स्वःऽविदः । तपः । दीक्षाम् । उपऽनिसेदुः । अग्रे ।
ततः । राष्ट्रम् । बलम् । ओजः । च । जातम् । तत् । अस्मै । देवाः । उपऽसंनमन्तु ॥ १ ॥

### ( ४२ ) द्विचत्वारिंशं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । ब्रह्म देवता । (१) प्रथमर्चोऽनुष्टुप्, (२) द्वितीयायास्त्र्यवसाना ककुम्मती पथ्यापङ्क्तिः, (३) तृतीयायास्त्रिष्टुप्, (४) चतुर्थ्याश्च जगती छन्दांसि ॥

ब्रह्म होता ब्रह्म यज्ञा ब्रह्मणा स्वरवो मिताः ।
अध्वर्युर्ब्रह्मणो जातो ब्रह्मणोन्तर्हितं हविः ॥१॥
ब्रह्म स्रुचो घृतवतीर्ब्रह्मणा वेदिरुद्धिता ।
ब्रह्म यज्ञस्य तत्त्वं च ऋत्विजो ये हविष्कृतः । शमिताय स्वाहा ॥२॥
अंहोमुचे प्र भरे मनीषामा सुत्राव्णे सुमतिमावृणानः ।
इदमिन्द्र प्रति हव्यं गृभाय सत्याः सन्तु यजमानस्य कामाः ॥३॥
अंहोमुचं वृषभं यज्ञियानां विराजन्तं प्रथममध्वराणाम् ।
अपां नपातमश्विना हुवे धिय इन्द्रियेण त इन्द्रियं दत्तमोजः ॥४॥

ब्रह्म । होता । ब्रह्म । यज्ञाः । ब्रह्मणा । स्वरवः । मिताः ।
अध्वर्युः । ब्रह्मणः । जातः । ब्रह्मणः । अन्तःऽहितम् । हविः ॥ १ ॥
ब्रह्म । स्रुचः । घृतऽवतीः । ब्रह्मणा । वेदिः । उद्धिता ।
ब्रह्म । यज्ञस्य । तत्त्वम् । च । ऋत्विजः । ये । हविःऽकृतः । शमिताय । स्वाहा ॥२॥
अंहःऽमुचे । प्र । भरे । मनीषाम् । आ । सुऽत्राव्ने । सुऽमतिम् । आऽवृणानः ।
इमम् । इन्द्र । प्रति । हव्यम् । गृभाय । सत्याः । सन्तु । यजमानस्य । कामाः ॥ ३ ॥
अंहःऽमुचम् । वृषभम् । यज्ञियानाम् । विऽराजन्तम् । प्रथमम । अध्वराणाम् ।
अपाम् । नपातम् । अश्विना । हुवे । धियः । इन्द्रियेण । ते । इन्द्रियम् । दत्तम् । ओजः ॥

## Tapa

**XIX.41.1** Desirous of weal, attainers of light, the seers began austerity and consecration in ancient times. Therefrom the kingdom, strength and vigour was born. May the bounties of Nature bring all that under control of this person.

## Extolling the Brahman

**XIX.42.1** The Divine Supreme is the sacrificer; the divine Supreme is the sacrifices; the sacrificial posts have been set up by the Divine Supreme. The adhvaryu priest is born of the Divine Supreme; and the sacrificial offering is put within the Divine Supreme.

**XIX.42.2** The Divine Supreme is the ladles full of clarified butter; by the Divine Supreme the sacrificial altar is raised; the Divine Supreme is the substance of the sacrifice, as well as the priests that offer oblations. Svāhā to the pacified one.

**XIX.42.3** Choosing favour of Him, who protects well; I offer my praises to the deliverer from sins. O resplendent Lord, may you accept this offering. May the wishes of the sacrificer come true.

**XIX.42.4** The deliverer from sin, the best among those who deserve worship, shining, and foremost at the sacrifices, the child of the waters (Agni) -- Him, O twins-divined, I invoke; may they two grant you wisdom, strength and vigour by their strength.

( ४३ ) त्रिचत्वारिंशं सूक्तम्

(१-८) अष्टर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । मन्त्रोक्ता ब्रह्मा वा देवता । त्र्यवसाना शङ्कुमती पथ्यापङ्क्तिश्छन्दः ॥

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
अग्निर्मा तत्र नयत्वग्निर्मेधा दधातु मे । अग्नये स्वाहा ॥१॥
यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
वायुर्मा तत्र नयतु वायुः प्राणान्दधातु मे । वायवे स्वाहा ॥२॥
यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
सूर्यो मा तत्र नयतु चक्षुः सूर्यो दधातु मे । सूर्याय स्वाहा ॥३॥
यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
चन्द्रो मा तत्र नयतु मनश्चन्द्रो दधातु मे । चन्द्राय स्वाहा ॥४॥
यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
सोमो मा तत्र नयतु पयः सोमो दधातु मे । सोमाय स्वाहा ॥५॥
यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
इन्द्रो मा तत्र नयतु बलमिन्द्रो दधातु मे । इन्द्राय स्वाहा ॥६॥

यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।
अग्निः । मा । तत्र । नयतु । अग्निः । मेधाः । दधातु । मे । अग्नये । स्वाहा ॥ १ ॥
यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।
वायुः । मा । तत्र । नयतु । वायुः । प्राणान् । दधातु । मे । वायवे । स्वाहा ॥ २ ॥
यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।
सूर्यः । मा । तत्र । नयतु । चक्षुः । सूर्यः । दधातु । मे । सूर्याय । स्वाहा ॥ ३ ॥
यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।
चन्द्रः । मा । तत्र । नयतु । मनः । चन्द्रः । दधातु । मे । चन्द्राय । स्वाहा ॥ ४ ॥
यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।
सोमः । मा । तत्र । नयतु । पयः । सोमः । दधातु । मे । सोमाय । स्वाहा ॥ ५ ॥
यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।
इन्द्रः । मा । तत्र । नयतु । बलम् । इन्द्रः । दधातु । मे । इन्द्राय । स्वाहा ॥ ६ ॥

## To Various Gods : For attaining heaven

**XIX.43.1** Whither the realizers of the Divine Supreme go with consecration and austerity, may the fire divine lead me thither; may the fire divine grant me wisdom. I dedicate it to the fire divine.

**XIX.43.2** Whither the realizers of the Divine Supreme go with consecration and austerity, may the cosmic wind lead me thither; may the cosmic wind grant me vital breaths. I dedicate it to the cosmic wind.

**XIX.43.3** Whither the realizers of the divine supreme go with consecration and austerity; may the sun lead me thither; may the sun grant me vision. I dedicate it to the sun.

**XIX.43.4** Whither the realizers of the Divine Supreme go with consecration and austerity, may the moon lead me thither; may the moon grant me (a pleasant) mind. I dedicate it to the moon.

**XIX.43.5** Whither the realizers of the Divine Supreme go with consecration and austerity, may the curing principle (soma) lead me thither; may the curing principle grant me the sap. I dedicate it to the curing principle.

**XIX.43.6** Whither the realizers of the Divine Supreme go with consecration and austerity, may the resplendent self (Indra) lead me thither; may the resplendent self grant me the strength. I dedicate it to the resplendent self.

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
आपो मा तत्र नयन्त्वमृतं मोप तिष्ठतु । अद्भ्यः स्वाहा ॥७॥
यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
ब्रह्मा मा तत्र नयतु ब्रह्मा ब्रह्म दधातु मे । ब्रह्मणे स्वाहा ॥८॥

यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।
आपः । मा । तत्र । नयतु । अमृतम् । मा । उप । तिष्ठतु । अत्ऽभ्यः । स्वाहा ॥७॥
यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।
ब्रह्मा । मा । तत्र । नयतु । ब्रह्मा । ब्रह्म । दधातु । मे । ब्रह्मणे । स्वाहा ॥ ८ ॥

( ४४ ) चतुश्चत्वारिंशं सूक्तम्

(१-१०) दशर्चस्यास्य सूक्तस्य भृगुर्ऋषिः । (१-७, १०) प्रथमादिसप्तर्चां दशम्याश्चाञ्जनम्, (८-९) अष्टमी-नवम्योश्च वरुणो देवते । (१-३, ६-१०) प्रथमादितृचस्य षष्ठयादिपञ्चानाञ्चानुष्टुप्, (४) चतुर्थ्याश्चतुष्पदा शङ्कुमत्युष्णिक्, (५) पञ्चम्याश्च त्रिपदा निचृद्विषमा गायत्री छन्दांसि ॥

आयुषोसि प्रतरणं विप्रं भेषजमुच्यसे । तदाञ्जन त्वं शंताते शमापो अभयं कृतम् ॥१॥
यो हरिमा जायान्योऽङ्गभेदो विसल्पकः । सर्वं ते यक्ष्ममङ्गेभ्यो बहिर्निर्हन्त्वाञ्जनम् ॥२॥
आञ्जनं पृथिव्यां जातं भद्रं पुरुषजीवनम् । कृणोत्वप्रमायुकं रथजूतिमनागसम् ॥३॥
प्राण प्राणं त्रायस्वासो असवे मृड । निर्ऋते निर्ऋत्या नः पाशेभ्यो मुञ्च ॥४॥

आयुषः । असि । प्रऽतरणम् । विप्रम् । भेषजम् । उच्यसे ।
तत् । आऽअञ्जन । त्वम् । शम्ऽताते । शम् । आपः । अभयम् । कृतम् ॥ १ ॥
यः । हरिमा । जायान्यः । अङ्गऽभेदः । विऽसल्पकः ।
सर्वम् । ते । यक्ष्मम् । अङ्गेभ्यः । बहिः । निः । हन्तु । आऽअञ्जनम् ॥ २ ॥
आऽअञ्जनम् । पृथिव्याम् । जातम् । भद्रम् । पुरुषऽजीवनम् ।
कृणोतु । अप्रऽमायुकम् । रथऽजूतिम् । अनागसम् ॥ ३ ॥
प्राण । प्राणम् । त्रायस्व । असो इति । असवे । मृड । निःऽऋते । निःऽऋत्याः । नः ।
पाशेभ्यः । मुञ्च ॥ ४ ॥

**XIX.43.7** Whither the realizers of the Divine Supreme go with consecration and austerity, may the elemental water lead me thither, may the immortality come to me. I dedicate it to the elemental waters.

**XIX.43.8** Whither the realizers of the Divine Supreme go with consecration and austerity, may the Lord of knowledge lead me thither; may the Lord of knowledge grant me the sacred knowledge.

### Añjanam : ointment against disease

**XIX.44.1** You are the lengthener of life-span; you are said to be an all-cure medicine. So, O ointment, augmenter of happiness, may you and the waters give us relief and freedom from fear.

**XIX.44.2** What jaundice, venerable disease, aching of limbs, and herpes are there - all those wasting diseases, may this ointment strike out of your limbs.

**XIX.44.3** May this ointment, born on earth, beneficial, and life-giver of men, make me unperishing, fast chariot-rider, and sinless.

**XIX.44.4** O vital breath, preserve our breath. O life, be gracious to our life. O destroyer, may you release us from the snares of destruction.

सिन्धोर्गर्भोऽसि विद्युतां पुष्पम् । वातः प्राणः सूर्यश्चक्षुर्दिवस्पयः ॥५॥
देवाञ्जन त्रैककुदं परि मा पाहि विश्वतः । न त्वा तरन्त्योषधयो बाह्याः पर्वतीया उत ॥६॥
वीदं मध्यमवासृपद्रक्षोहामीवचातनः । अमीवाः सर्वाश्चातयन्नाशयदभिभा इतः ॥७॥
बह्वीदं राजन्वरुणानृतमाह पूरुषः । तस्मात्सहस्रवीर्य मुञ्च नः पर्यंहसः ॥८॥
यदापो अघ्न्या इति वरुणेति यदूचिम । तस्मात्सहस्रवीर्य मुञ्च नः पर्यंहसः ॥९॥
मित्रश्च त्वा वरुणश्चानुप्रेयतुराञ्जन । तौ त्वानुगत्य दूरं भोगाय पुनरोहतुः ॥१०॥

सिन्धोः । गर्भः । असि । विऽद्युताम् । पुष्पम् । वातः । प्राणः । सूर्यः । चक्षुः । दिवः । पयः ।
देवऽआञ्जन । त्रैककुद । परि । मा । पाहि । विश्वतः ।
न । त्वा । तरन्ति । ओषधयः । बाह्याः । पर्वतीयाः । उत ॥ ६ ॥
वि । इदम् । मध्यम् । अव । असृपत् । रक्षःऽहा । अमीवऽचातनः ।
अमीवाः । सर्वाः । चातयत् । नाशयत् । अभिऽभाः । इतः ॥ ७ ॥
बहु । इदम् । राजन् । वरुण । अनृतम् । आह । पुरुषः ।
तस्मात् । सहस्रऽवीर्य । मुञ्च । नः । परि । अंहसः ॥ ८ ॥
यत् । आपः । अघ्न्याः । इति । वरुण । इति । यत् । ऊचिम ।
तस्मात् । सहस्रऽवीर्य । मुञ्च । नः । परि । अंहसः ॥ ९ ॥
मित्रः । च । त्वा । वरुणः । च । अनुऽप्रेयतुः । आऽअञ्जन ।
तौ । त्वा । अनुऽगत्य । दूरम् । भोगाय । पुनः । आ । ऊहतुः ॥ १० ॥

**XIX.44.5** You are embryo of the ocean and flower of the lightnings. You are the wind, (our) breath, the sun, (our) vision, and the sap of heaven.

**XIX.44.6** O ointment divine, brought from the three-humped (Trikakut) mountain, may you guard me from all (sides). Medicinal plants, whether of foreign lands or of the mountains, can never surpass you.

**XIX.44.7** Killer of harmful germs and expeller of disease, this (ointment) has come down in our midst, driving away all the diseases and making impending calamities vanish.

### Varuṇa

**XIX.44.8** O sovereign venerable Lord, man tells here many a lie, from that guilt, may you of thousand-fold strength, free us completely.

**XIX.44.9** In that we have said O waters, O inviolable, O Varuṇa, from that sin, may you of thousand fold strength; free us completely.

### Ointment

**XIX.44.10** Mitra and Varuna, both, have gone after thee, O Ointment; they having gone far after thee, brought thee back for enjoyment (bhoga).

### ( ४५ ) पञ्चचत्वारिंशं सूक्तम्

(१-१०) दशर्चस्यास्य सूक्तस्य भृगुर्ऋषिः । (१-५) प्रथमादिपञ्चर्चामाञ्जनम्, (६-१०) षष्ठयादिपञ्चानाञ्च मन्त्रोक्ता देवताः । (१-२) प्रथमाद्वितीययोर्ऋचोरनुष्टुप्, (३-५) तृतीयादितृचस्य त्रिष्टुप्, (६) षष्ठ्या एकावसाना विराण्महाबृहती, (७-१०) सप्तम्यादिचतसृणाञ्चैकावसाना निचृन्महाबृहती छन्दांसि ॥

ऋणादृणमिव संनयन्कृत्यां कृत्याकृतो गृहम् । चक्षुर्मन्त्रस्य दुर्हार्दः पृष्टीरपि शृणाञ्जन ॥१॥

यदस्मासु दुष्वप्न्यं यद्गोषु यच्च नो गृहे ।
अनामगस्तच्च दुर्हार्दःप्रियः प्रति मुञ्चताम् ॥२॥

अपामूर्ज ओजसो वावृधानमग्नेर्जातमधि जातवेदसः ।
चतुर्वीरं पर्वतीयं यदाञ्जनं दिशः प्रदिशः करदिच्छिवास्ते ॥३॥

चतुर्वीरं बध्यत आञ्जनं ते सर्वा दिशो अभयास्ते भवन्तु ।
ध्रुवस्तिष्ठासि सवितेव चार्य इमा विशो अभि हरन्तु ते बलिम् ॥४॥

आक्ष्वैकं मणिमेकं कृणुष्व स्नाह्येकेना पिबैकमेषाम् ।
चतुर्वीरं नैर्ऋतेभ्यश्चतुर्भ्यो ग्राह्या बन्धेभ्यः परि पात्वस्मान् ॥५॥

ऋणात् । ऋणम्ऽइव । सम् । नय । कृत्याम् । कृत्याऽकृतः । गृहम् ।
चक्षुःऽमन्त्रस्य । दुःऽहार्दः । पृष्टीः । अपि । शृण । आऽअञ्जन ॥ १ ॥

यत् । अस्मासु । दुःऽस्वप्न्यम् । यत् । गोषु । यत् । च । नः । गृहे ।
अनामगः । तम् । च । दुःऽहार्दः । प्रियः । प्रति । मुञ्चताम् ॥ २ ॥

अपाम् । ऊर्जः । ओजसः । ववृधानम् । अग्नेः । जातम् । अधि । जातऽवेदसः ।
चतुःऽवीरम् । पर्वतीयम् । यत् । आऽअञ्जनम् । दिशः । प्रऽदिशः । करत् । इत् । शिवाः । ते ॥

चतुःऽवीरम् । बध्यते । आऽअञ्जनम् । ते । सर्वाः । दिशः । अभयाः । ते । भवन्तु ।
ध्रुवः । तिष्ठासि । सविताऽइव । च । आर्यः । इमाः । विशः । अभि । हरन्तु । ते । बलिम् ॥

आ । अक्ष्व । एकम् । मणिम् । एकम् । कृणुष्व । स्नाहि । एकेन । आ । पिब । एकम् ।
एषाम् । चतुःऽवीरम् । नैःऽऋतेभ्यः । चतुःऽभ्यः । ग्राह्याः । बन्धेभ्यः । परि । पातु । अस्मान् ॥

## Añjanam : Ointment

**XIX.45.1** Just as one repays a loan (taken) from a creditor, so may you carry the harmful device to the house of the device-maker; O añjana blessing, may you crush the ribs of the enemy, who conspires with his eyes.

**XIX.45.2** Whatever evil-dreaming is there in us,in our cows and in our household, may (this) dear (blessing) inflict that on the enemy having fictitious names; the unpleasant enemy, having fictitious names, put that on himself.

**XIX.45.3** May this mountain-born añjana blessing, flourishing with the vigour and might of the waters, and born from the fire divine, cognizant of all beings, and full of four-fold strength, make the quarters propitious for you.

**XIX.45.4** This añjana blessing of four-fold strength is being bound upon you. May all the quarters be free from fear to you. O lord, may you stay firm like the impeller Lord; let these people bring tribute to you.

**XIX.45.5** Apply one to your eyes; wear one as a jewel; bathe with one, and drink one of them. May this blessing of four-fold strength protect us fully from the four calamitous bonds of the gripping disease (seizure).

अग्निर्माग्निनावतु प्राणायापानायायुषे वर्चस ओजसे तेजसे स्वस्तये सुभूतये स्वाहा ॥६॥
इन्द्रो मेन्द्रियेणावतु प्राणायापानायायुषे वर्चस ओजसे तेजसे स्वस्तये सुभूतये स्वाहा ॥७॥
सोमो मा सौम्येनावतु प्राणायापानायायुषे वर्चस ओजसे तेजसे स्वस्तये सुभूतये स्वाहा ॥८॥
भगो मा भगेनावतु प्राणायापानायायुषे वर्चस ओजसे तेजसे स्वस्तये सुभूतये स्वाहा ॥९॥
मरुतो मा गणैरवन्तु प्राणायापानायायुषे वर्चस ओजसे तेजसे स्वस्तये सुभूतये स्वाहा ॥१०॥

अग्निः । मा । अग्निना । अवतु । प्राणाय । अपानाय । आयुषे ।
वर्चसे । ओजसे । तेजसे । स्वस्तये । सुऽभूतये । स्वाहा ॥ ६ ॥

इन्द्रः । मा । इन्द्रियेण । अवतु । प्राणाय । अपानाय । आयुषे ।
वर्चसे । ओजसे । तेजसे । स्वस्तये । सुऽभूतये । स्वाहा ॥ ७ ॥

सोमः । मा । सौम्येन । अवतु । प्राणाय । अपानाय । आयुषे । वर्चसे ।
ओजसे । तेजसे । स्वस्तये । सुऽभूतये । स्वाहा ॥ ८ ॥

भगः । मा । भगेन । अवतु । प्राणाय । अपानाय । आयुषे ।
वर्चसे । ओजसे । तेजसे । स्वस्तये । सुऽभूतये । स्वाहा ॥ ९ ॥

मरुतः । मा । गणैः । अवन्तु । प्राणाय । अपानाय । आयुषे ।
वर्चसे । ओजसे । तेजसे । स्वस्तये । सुऽभूतये । स्वाहा ॥ १० ॥

### ( ४६ ) षट्चत्वारिंशं सूक्तम्

(१-७) सप्तर्चस्यास्य सूक्तस्य प्रजापतिर्ऋषिः । अस्तृतमणिर्देवता । (१) प्रथमर्चः पञ्चपदा मध्येज्योतिष्मती त्रिष्टुप्, (२) द्वितीयाया षट्पदा भुरिक् शक्वरी, (३, ७) तृतीयासप्तम्योः पञ्चपदा पथ्यापङ्क्तिः, (४) चतुर्थ्याश्चतुष्पदा त्रिष्टुप्, (५) पञ्चम्याः पञ्चपदा शक्वरी, (६) षष्ठ्याश्च पञ्चपदोष्णिग्गर्भा विराड्जगती छन्दांसि ॥

प्रजापतिष्ट्वा बध्नात्प्रथममस्तृतं वीर्याय कम् ।
तत्ते बध्नाम्यायुषे वर्चस ओजसे च बलाय चास्तृतस्त्वाभि रक्षतु ॥१॥

प्रजाऽपतिः । त्वा । बध्नात् । प्रथमम् । अस्तृतम् । वीर्याय । कम् । तत् । ते । बध्नामि ।
आयुषे । वर्चसे । ओजसे । च । बलाय । च । अस्तृतः । त्वा । अभि । रक्षतु ॥१॥

## To other Gods

**XIX.45.6** May the adorable Lord preserve me with vital heat for in-breath, for out-breath, for long life, for lustre, for vigour, for majesty, for weal, for good prosperity. Svāhā.

**XIX.45.7** May the resplendent Lord preserve me with the strength (of the sense-organs) for in-breath, for out-breath, for long life, for lustre, for vigour, for majesty, for weal, for good prosperity. Svāhā.

**XIX.45.8** May the blissful Lord preserve me with bliss for in-breath, for out-breath, for long life, for lustre, for vigour, for majesty, for weal, for good prosperity. Svāhā.

**XIX.45.9** May the bounteous Lord preserve me with bounty for in-breath, for out-breath, for long life, for lustre, for vigour, for majesty, for weal, for good prosperity. Svāhā.

**XIX.45.10** May the brave soldiers (cloud-bearing winds) preserve me with the troops for in-breath, for out-breath, for long life, lustre, for vigour, for majesty, for weal, for good prosperity. Svāhā.

## Astṛtamaṇi : unsubdued blessing

**XIX.46.1** The Lord of creatures, in the beginning, bound you, the delightful astṛta (unsubdued) blessing, for performing heroic deeds. That very (blessing) I bind on you for a long life, for lustre, for vigour and for strength, may the unsubdued protect you all around.

ऊर्ध्वस्तिष्ठतु रक्षन्नप्रमादमस्तृतेमं मा त्वा दभन्पणयो यातुधानाः ।
इन्द्र इव दस्यूनव धूनुष्व पृतन्यतः सर्वाञ्छत्रून्वि षहस्वास्तृतस्त्वाभि रक्षतु ॥२॥
शतं च न प्रहरन्तो निघ्नन्तो न तस्तिरे ।
तस्मिन्निन्द्रः पर्यदत्त चक्षुः प्राणमथो बलमस्तृतस्त्वाभि रक्षतु ॥३॥
इन्द्रस्य त्वा वर्मणा परि धापयामो यो देवानामधिराजो बभूव ।
पुनस्त्वा देवाः प्र णयन्तु सर्वेस्तृतस्त्वाभि रक्षतु ॥४॥
अस्मिन्मणावेकशतं वीर्याणि सहस्रं प्राणा अस्मिन्नस्तृते ।
व्याघ्रः शत्रूनभि तिष्ठ सर्वान्यस्त्वा पृतन्यादधरः सो अस्त्वस्तृतस्त्वाभि रक्षतु ॥५॥
घृतादुल्लुप्तो मधुमान्पयस्वान्त्सहस्रप्राणः शतयोनिर्वयोधाः ।
शंभूश्च मयोभूश्चोर्जस्वांश्च पयस्वांश्चास्तृतस्त्वाभि रक्षतु ॥६॥

ऊर्ध्वः । तिष्ठतु । रक्षन् । अप्रऽमादम् । अस्तृत । इमम् । मा । त्वा । दभन् । पणयः ।
यातुऽधानाः । इन्द्रःऽइव । दस्यून् । अव । धूनुष्व । पृतन्यतः । सर्वान् । शत्रून् । वि ।
सहस्व । अस्तृतः । त्वा । अभि । रक्षतु ॥ २ ॥

शतम् । च । न । प्रऽहरन्तः । निऽघ्नन्तः । न । तस्तिरे । तस्मिन् । इन्द्रः । परि ।
अदत्त । चक्षुः । प्राणम् । अथो इति । बलम् । अस्तृतः । त्वा । अभि । रक्षतु ॥ ३ ॥
इन्द्रस्य । त्वा । वर्मणा । परि । धापयामः । यः । देवानाम् । अधिऽराजः । बभूव ।
पुनः । त्वा । देवाः । प्र । नयन्तु । सर्वे । अस्तृतः । त्वा । अभि । रक्षतु ॥ ४ ॥

अस्मिन् । मणौ । एकऽशतम् । वीर्याणि । सहस्रम् । प्राणाः । अस्मिन् । अस्तृते ।
व्याघ्रः । शत्रून् । अभि । तिष्ठ । सर्वान् । यः । त्वा । पृतन्यात् । अधरः । सः । अस्तु ।
अस्तृतः । त्वा । अभि । रक्षतु ॥ ५ ॥

घृतात् । उत्ऽलुप्तः । मधुऽमान् । पयस्वान् । सहस्रऽप्राणः । शतऽयोनिः । वयःऽधाः ।
शम्ऽभूः । च । मयःऽभूः । च । ऊर्जस्वान् । च । पयस्वान् । च । अस्तृतः । त्वा । अभि । रक्षतु॥

**XIX.46.2** O unsubdued (blessing), may you stand up to defend this person with ceaseless care. May not the crafty merchants harm you. Just as the resplendent army chief destroys the robbers, so may you shake off the invaders. May you overwhelm all your enemies; may the unsubdued protect you all around.

**XIX.46.3** Whom hundreds of assailants, attaching and smiting, have failed to subdue, to him the resplendent Lord has set the vision, life and also strength; may the unsubdued protect you all around.

**XIX.46.4** We cover you with the armour of the resplendent Lord, who is the overlord of the bounties of Nature. May all the enlightened ones lead you forth again; may the unsubdued protect you all around.

**XIX.46.5** A hundred and one powers and a thousands lives are there in this unsubdued blessing. Like a tiger, attack all your enemies. Whoso invades you, may he fall below; may the unsubdued protect you all around.

**XIX.46.6** Besmeared with clarified butter, rich in honey and milk, possessing a thousand lives and a hundred incarnations, bestower of life-span, granter of peace and happiness, full of vigour and sap, may the unsubdued protect you all around.

यथा त्वमुत्तरोसो असपत्नः सपत्नहा ।
सजातानामसद्वशी तथा त्वा सविता करदस्तृतस्त्वाभि रक्षतु ॥७॥

यथा । त्वम् । उत्ऽतरः । असः । असपत्नः । सपत्नऽहा । सऽजातानाम् । असत् । वशी । तथा । त्वा । सविता । करत् । अस्तृतः । त्वा । अभि । रक्षतु ॥ ७ ॥

( ४७ ) सप्तचत्वारिंशं सूक्तम्

(१-९) नवर्चस्यास्य सूक्तस्य गोपथ ऋषिः । रात्रिर्देवता । (१) प्रथमर्चः पथ्याबृहती, (२) द्वितीयायाः पञ्चपदानुष्टुब्गर्भा परातिजगती, (३-५, ८-९) तृतीयादित्र्यचस्याष्टमीनवम्योश्चानुष्टुप्, (६) षष्ठ्याः पुरस्ताद्बृहती, (७) सप्तम्याश्च त्र्यवसाना षट्पदा जगती छन्दांसि ॥

आ रात्रि पार्थिवं रजः पितुरप्रायि धामभिः ।
दिवः सदांसि बृहती वि तिष्ठस आ त्वेषं वर्तते तमः ॥१॥
न यस्याः पारं ददृशे न योयुवद्विश्वमस्यां नि विशते यदेजति ।
अरिष्टासस्त उर्वि तमस्वति रात्रि पारमशीमहि भद्रे पारमशीमहि ॥२॥
ये ते रात्रि नृचक्षसो द्रष्टारो नवतिर्नव । अशीतिः सन्त्यष्टा उतो ते सप्त सप्ततिः ॥३॥
षष्टिश्च षट् च रेवति पञ्चाशत्पञ्च सुम्नयि । चत्वारश्चत्वारिंशच्च त्रयस्त्रिंशच्च वाजिनि ॥४॥
द्वौ च ते विंशतिश्च ते रात्र्येकादशावमाः । तेभिर्नो अद्य पायुभिर्नु पाहि दुहितर्दिवः ॥५॥

आ । रात्रि । पार्थिवम् । रजः । पितुः । अप्रायि । धामऽभिः ।
दिवः । सदांसि । बृहती । वि । तिष्ठसे । आ । त्वेषम् । वर्तते । तमः ॥ १ ॥

न । यस्याः । पारम् । ददृशे । न । योयुवत् । विश्वम् । अस्याम् । नि । विशते । यत् । एजति । अरिष्टासः । ते । उर्वि । तमस्वति । रात्रि । पारम् । अशीमहि । भद्रे । पारम् । अशीमहि ॥ २ ॥

ये । ते । रात्रि । नृऽचक्षसः । द्रष्टारः । नवतिः । नव ।
अशीतिः । सन्ति । अष्टौ । उतो इति । ते । सप्त । सप्ततिः ॥ ३ ॥

षष्टिः । च । षट् । च । रेवति । पञ्चाशत् । पञ्च । सुम्नयि ।
चत्वारः । चत्वारिंशत् । च । त्रयः । त्रिंशत् । च । वाजिनि ॥ ४ ॥

द्वौ । च । ते । विंशतिः । च । ते । रात्रि । एकादश । अवमाः ।
तेभिः । नः । अद्य । पायुऽभिः । नु । पाहि । दुहितः । दिवः ॥ ५ ॥

**XIX.46.7** May the impeller Lord arrange it so that you shall be superior, having no rivals and destroyer of rivals, and exercising control over your kins; may the unsubdued protect you all around.

### To Rātri (Night) : for protection

**XIX.47.1** O night, the terrestrial space has been filled with the lights of the father (i.e., heaven). Mighty you spread forth upto the abodes of the sky. The glowful darkness pervades all around.

**XIX.47.2** In her, whose other end is not seen and who does not allow all things to be seen separately, all that moves, enters (to rest). O vast, darksome night, may we reach your other end unharmed; O benign one, may we reach the other end.

**XIX.47.3** O night, what your observers watching over men are there ninety-nine, or eighty-eight or seventy-seven;

**XIX.47.4** And sixty-six, O opulent one, and fifty-five, O delightful, and forty-four and thirty-three O speeding one;

**XIX.47.5** And your twenty-two, and , O night, eleven at least are there, with those guards, may you guard us sure today, O heaven's daughter.

रक्षा माकिर्नो अघशंस ईशत मा नो दुःशंस ईशत ।
मा नो अद्य गवां स्तेनो मावीनां वृक ईशत ॥६॥
माश्वानां भद्रे तस्करो मा नृणां यातुधान्यः ।
परमेभिः पथिभि स्तेनो धावतु तस्करः । परेण दत्वती रज्जुः परेणाघायुरर्षतु ॥७॥
अध रात्रि तृष्टधूममशीर्षाणमहिं कृणु । हनू वृकस्य जम्भयास्तेन तं द्रुपदे जहि ॥८॥
त्वयि रात्रि वसामसि स्वपिष्यामसि जागृहि । गोभ्यो नः शर्म यच्छाश्वेभ्यः पुरुषेभ्यः ॥९॥

रक्ष । माकिः । नः । अघऽशंसः । ईशत । मा । नः । दुःऽशंसः । ईशत ।
मा । नः । अद्य । गवाम् । स्तेनः । मा । अवीनाम् । वृकः । ईशत ॥ ६ ॥
मा । अश्वानाम् । भद्रे । तस्करः । मा । नृणाम् । यातुऽधान्यः । परमेभिः । पथिऽभिः ।
स्तेनः । धावतु । तस्करः । परेण । दत्वती । रज्जुः । परेण । अघऽयुः । अर्षतु ॥ ७ ॥
अध । रात्रि । तृष्टऽधूमम् । अशीर्षाणम् । अहिम् । कृणु । हनू इति । वृकस्य ।
जम्भयाः । तेन । तम् । द्रुऽपदे । जहि ॥ ८ ॥
त्वयि । रात्रि । वसामसि । स्वपिष्यामसि । जागृहि ।
गोभ्यः । नः । शर्म । यच्छ । अश्वेभ्यः । पुरुषेभ्यः ॥ ९ ॥

( ४८ ) अष्टचत्वारिंशं सूक्तम्

(१-६) षड्ऋचस्यास्य सूक्तस्य गोपथ ऋषिः । रात्रिर्देवता । (१) प्रथमर्चस्त्रिपदार्षी गायत्री, (२) द्वितीयायास्त्रिपदा विराडनुष्टुप्, (३) तृतीयाया बृहतीगर्भानुष्टुप्, (४, ६) चतुर्थीषष्ठयोरनुष्टुप्, (५) पञ्चम्याश्च पथ्यापङ्क्तिश्छन्दांसि ॥

अथो यानि च यस्मा ह यानि चान्तः परीणहि । तानि ते परि दद्मसि ॥१॥

अथो इति । यानि । च । यस्मै । ह । यानि । च । अन्तः । परिऽनहि । तानि ।
ते । परि । दद्मसि ॥ १ ॥

**XIX.47.6** Protect us; may no cruel killer overpower us; may no abusing rogue overpower us. May not a thief of cows overpower us today; may not a wolf to the sheep overpower us.

**XIX.47.7** O benign one, not a robber of horses, nor the torturers of men (overpower us). By remotest pathways may the thief and the robber flee; by the distant road the fanged rope and by the distant one may the wicked hasten.

**XIX.47.8** Now, O night, make headless the serpent, causing great thirst by its hissing, crush the jaws of the wolf, and dash the thief to the wooden post.

**XIX.47.9** O night, we dwell within you; we shall sleep; may you keep awake watchful, give shelter to our cows, horses and men.

### To Rātri (night)

**XIX.48.1** Now, what things we have collected and what are (lying) in the chest, all those we entrust to you.

रात्रि मातरुषसे नः परि देहि । उषा नो अह्ने परि ददात्वहस्तुभ्यं विभावरि ॥२॥
यत्किं चेदं पतयति यत्किं चेदं सरीसृपम् ।
यत्किं च पर्वतायासत्वं तस्मात्त्वं रात्रि पाहि नः ॥३॥
सा पश्चात्पाहि सा पुरः सोत्तरादधरादुत ।
गोपाय नो विभावरि स्तोतारस्त इह स्मसि ॥४॥
ये रात्रिमनुतिष्ठन्ति ये च भूतेषु जाग्रति ।
पशून्ये सर्वान्रक्षन्ति ते न आत्मसु जाग्रति ते नः पशुषु जाग्रति ॥५॥
वेद वै रात्रि ते नाम घृताची नाम वा असि ।
तां त्वां भरद्वाजो वेद सा नो वित्तेधि जाग्रति ॥६॥

रात्रि । मातः । उषसे । नः । परि । देहि । उषाः । नः । अह्ने । परि । ददातु । अहः ।
तुभ्यम् । विभावरि ॥ २ ॥
यत् । किम् । च । इदम् । पतयति । यत् । किम् । च । इदम् । सरीसृपम् ।
यत् । किम् । च । पर्वताय । असत्वम् । तस्मात् । त्वम् । रात्रि । पाहि । नः ॥ ३ ॥
सा । पश्चात् । पाहि । सा । पुरः । सा । उत्तरात् । अधरात् । उत ।
गोपाय । नः । विभावरि । स्तोतारः । ते । इह । स्मसि ॥ ४ ॥
ये । रात्रिम् । अनुऽतिष्ठन्ति । ये । च । भूतेषु । जाग्रति ।
पशून् । ये । सर्वान् । रक्षन्ति । ते । नः । आत्मऽसु । जाग्रति । ते । नः । पशुषु । जाग्रति ॥
वेद । वै । रात्रि । ते । नाम । घृताची । नाम । वै । असि ।
ताम् । त्वाम् । भरत्ऽवाजः । वेद । सा । नः । वित्ते । अधि । जाग्रति ॥ ६ ॥

**XIX.48.2** O mother night, may you hand us over to the dawn; may the dawn hand us over to the day; may the day hand us over to you, O glowing one.

**XIX.48.3** Whatsoever that flies, whatsoever that glides, and whatsoever a rougue beast of mountains is there, (grips our joints) from that, O night, may you protect us.

**XIX.48.4** As such may you protect us from behind, you from in front, you from above and from underneath as well. O glowing one, do protect us. Here we are your praise-singers.

**XIX.48.5** They, who perform rituals at night, and they, who keep awake within the beings, and they, who protect all cattle, may they keep awake within (watch over) our selves, keep awake with in (watch-over) our cattle.

**XIX.48.6** I know, verily, your name, O night, 'dripping clarified butter' (gṛtāchi) is your name. The possessor of strength (Bharadvāj) knows you as such. So may you keep awake and watch over our possessions.

( ४९ ) एकोनपञ्चाशं सूक्तम्

(१-१०) दशर्चस्यास्य सूक्तस्य गोपथो भरद्वाजश्च ऋषी । रात्रिर्देवता । (१-५, ८) प्रथमादिपञ्चर्चोमष्टम्याश्च त्रिष्टुप्, (६) षष्ठया आस्तारपङ्क्तिः, (७) सप्तम्याः पथ्यापङ्क्तिः, (९) नवम्या अनुष्टुप्, (१०) दशम्याश्च त्र्यवसाना षट्पदा जगती छन्दांसि ॥

इषिरा योषा युवतिर्दमूना रात्री देवस्य सवितुर्भगस्य ।
अश्वक्षभा सुहवा संभृतश्रीरा पप्रौ द्यावापृथिवी महित्वा ॥१॥
अति विश्वान्यरुहद्गम्भीरो वर्षिष्ठमरुहन्त श्रविष्ठाः ।
उशती रात्र्यनु सा भद्राभि तिष्ठते मित्र इव स्वधाभिः ॥२॥
वर्ये वन्दे सुभगे सुजात आजगन्रात्रि सुमना इह स्याम् ।
अस्मांस्त्रायस्व नर्याणि जाता अथो यानि गव्यानि पुष्ट्या ॥३॥
सिंहस्य रात्र्युशती पींषस्य व्याघ्रस्य द्वीपिनो वर्च आ ददे ।
अश्वस्य ब्रध्नं पुरुषस्य मायुं पुरु रूपाणि कृणुषे विभाती ॥४॥
शिवां रात्रिमनुसूर्यं च हिमस्य माता सुहवा नो अस्तु ।
अस्य स्तोमस्य सुभगे नि बोध येन त्वा वन्दे विश्वासु दिक्षु ॥५॥
स्तोमस्य नो विभावरि रात्रि राजेव जोषसे ।
असाम सर्ववीरा भवाम सर्ववेदसो व्युच्छन्तीरनूषसः ॥६॥

इषिरा । योषा । युवतिः । दमूनाः । रात्री । देवस्य । सवितुः । भगस्य । अश्वऽक्षभा ।
सुऽहवा । सम्ऽभृतश्रीः । आ । पप्रौ । द्यावापृथिवी इति । महिऽत्वा ॥ १ ॥
अति । विश्वानि । अरुहत् । गम्भीरः । वर्षिष्ठम् । अरुहन्त । श्रविष्ठाः ।
उशती । रात्री । अनु । सा । भद्रा । अभि । तिष्ठते । मित्रःऽइव । स्वधाभिः ॥ २ ॥
वर्ये । वन्दे । सुऽभगे । सुऽजाते । आ । अजगन् । रात्रि । सुऽमनाः । इह । स्याम् ।
अस्मान् । त्रायस्व । नर्याणि । जाता । अथो इति । यानि । गव्यानि । पुष्ट्या ॥३॥
सिंहस्य । रात्री । उशती । पींषस्य । व्याघ्रस्य । द्वीपिनः । वर्चः । आ । ददे ।
अश्वस्य । ब्रध्नम् । पुरुषस्य । मायुम् । पुरु । रूपाणि । कृणुषे । विऽभाती ॥ ४ ॥
शिवाम् । रात्रिम् । अनुऽसूर्यम् । च । हिमस्य । माता । सुऽहवा । नः । अस्तु ।
अस्य । स्तोमस्य । सुऽभगे । नि । बोध । येन । त्वा । वन्दे । विश्वासु । दिक्षु ॥५॥
स्तोमस्य । नः । विभावरि । रात्रि । राजाऽइव । जोषसे ।
असाम । सर्वऽवीराः । भवाम । सर्वऽवेदसः । विऽउच्छन्तीः । अनु । उषसः ॥ ६ ॥

## Night : Praises and Prayer

**XIX.49.1** Covetable, youthful maiden, night, dear to the impeller Lord of the fortune, all encompassing, easy to invoke, accumulating glory, has filled the heaven and earth with grandeur.

**XIX.49.2** Profound (darkness) has ascended over all things; the mightiest ones have ascended to highest sky; that benign night, full of desire, moves gradually (one) towards us like a friend with nice provisions (presents).

**XIX.49.3** O desirable, deserving worship, blissful, high-born night, you have come. May you stay here with friendly favour. May you protect us, O well born, and also the dairy products, which are beneficial for men with their nourishment.

**XIX.49.4** The night, full of passion, assumes the vigour of lion, elephant, tiger and of leopard, the colour of horse and the voice of man. O shining one, you take on many a form.

**XIX.49.5** I pay my homage to the benign night and the (time) after sunrise. Mother of snow, may she be easy of invocation for us. O bounteous one, may you notice this praise-song, with which I greet you in all the quarters.

**XIX.49.6** O glowful night, you relish our praise-song just like a king. Through the breaking of dawns, may we be with all our heroic sons and be with all our possessions.

शम्या ह नाम दधिषे मम दिप्सन्ति ये धना ।
रात्रीहि तानसुतपा य स्तेनो न विद्यते यत्पुनर्न विद्यते ॥७॥
भद्रासि रात्रि चमसो न विष्टो विष्वं गोरूपं युवतिर्बिभर्षि ।
चक्षुष्मती मे उशती वपूंषि प्रति त्वं दिव्या न क्षाममुक्थाः ॥८॥
यो अद्य स्तेन आयत्यघायुर्मर्त्यो रिपुः ।
रात्री तस्य प्रतीत्य प्र ग्रीवाः प्र शिरो हनत् ॥९॥
प्र पादौ न यथायति प्र हस्तौ न यथाशिषत् ।
यो मलिम्लुरुपायति स संपिष्टो अपायति ।
अपायति स्वपायति शुष्के स्थाणावपायति ॥१०॥

शम्या । ह । नाम । दधिषे । मम । दिप्सन्ति । ये । धना । रात्रि । इहि ।
तान् । असुऽतपा । यः । स्तेनः । न । विद्यते । यत् । पुनः । न । विद्यते ॥ ७ ॥

भद्रा । असि । रात्रि । चमसः । न । विष्टः । विष्वङ् । गोऽरूपम् । युवतिः । बिभर्षि ।
चक्षुष्मती । मे । उशती । वपूंषि । प्रति । त्वम् । दिव्या । न । क्षाम् । अमुक्थाः ॥

यः । अद्य । स्तेनः । आऽअयति । अघऽयुः । मर्त्यः । रिपुः ।
रात्री । तस्य । प्रतिऽइत्य । प्र । ग्रीवाः । प्र । शिरः । हनत् ॥ ९ ॥

प्र । पादौ । न । यथा । अयति । प्र । हस्तौ । न । यथा । अशिषत् ।
यः । मलिम्लुः । उपऽअयति । सः । सम्ऽपिष्टः । अप । अयति ।
अप । अयति । सुऽअपायति । शुष्के । स्थाणौ । अप । अयति ॥ १० ॥

( ५० ) पञ्चाशं सूक्तम्

(१-७) सप्तर्चस्यास्य सूक्तस्य गोपथ ऋषिः । रात्रिर्देवता । अनुष्टुप् छन्दः ॥

अध रात्रि तृष्टधूममशीर्षाणमहिं कृणु ।
अक्षौ वृकस्य निर्जह्यास्तेन तं द्रुपदे जहि ॥१॥

अध । रात्रि । तृष्टऽधूमम् । अशीर्षाणम् । अहिम् । कृणु ।
अक्षौ । वृकस्य । निः । जह्याः । तेन । तम् । द्रुऽपदे । जहि ॥ १ ॥

**XIX.49.7** You have indeed, assumed the name "Ramya, (Gueller). Whoso want to spoil my riches, may you, O night, come to them as a burner of their lives. Whosoever is a thief, may he not exist; may he never exist again.

**XIX.49.8** You are beautiful, O night, like a well-wrought bowl; a youthful maid, you assume all the aspects of a cow. Full of vision, full of desire, showing me your forms, like heavens, may you adorn this earth also.

**XIX.49.9** What thief comes today. a malicious mortal enemy, may the night, knowing his intent full well, strike off his shoulders as well as the head.

**XIX.49.10** May she strike off his feet, so that he may not, strike off his arms, so that he may not hurt. The marauder that comes, may he go away crushed to pulp. May he go away, go far away, go away to a dry and dreary stump.

## To Night : For protection

**XIX.50.1** Now, O night, make headless the serpent, causing great thirst by its hissing; strike the eyes of the wolf out of his head; dash the thief to the wooden post. (Av.XIX.47.8.Var.)

ये ते रात्र्यनड्वाहस्तीक्ष्णशृङ्गाः स्वाशवः ।
तेभिर्नो अद्य पारयाति दुर्गाणि विश्वहा ॥२॥
रात्रिंरात्रिमरिष्यन्तस्तरेम तन्वा वयम् ।
गम्भीरमप्लवा इव न तरेयुररातयः ॥३॥
यथा शाम्याकः प्रपतन्नपवान्नानुविद्यते ।
एवा रात्रि प्र पातय यो अस्माँ अभ्यघायति ॥४॥
अप स्तेनं वासो गोअजमुत तस्करम् ।
अथो यो अर्वतः शिरोभिधाय निनीषति ॥५॥
यदद्या रात्रि सुभगे विभजन्त्ययो वसु ।
यदेतदस्मान्भोजय यथेदन्यानुपायसि ॥६॥
उषसे नः परि देहि सर्वान्रात्र्यनागसः ।
उषा नो अह्ने आ भजादहस्तुभ्यं विभावरि ॥७॥

ये । ते । रात्रि । अनड्वाहः । तीक्ष्णऽशृङ्गाः । सुऽआशवः ।
तेभिः । नः । अद्य । पारय । अति । दुःऽगानि । विश्वहा ॥ २ ॥
रात्रिम्ऽरात्रिम् । अरिष्यन्तः । तरेम । तन्वा । वयम् ।
गम्भीरम् । अप्लवाऽइव । न । तरेयुः । अरातयः ॥ ३ ॥
यथा । शाम्याकः । प्रऽपतन् । अपऽवान् । न । अनुऽविद्यते ।
एव । रात्रि । प्र । पातय । यः । अस्मान् । अभिऽअघायति ॥ ४ ॥
अप । स्तेनम् । वासः । गोऽअजम् । उत । तस्करम् ।
अथो इति । यः । अर्वतः । शिरः । अभिऽधाय । निनीषति ॥ ५ ॥
यत् । अद्य । रात्रि । सुऽभगे । विऽभजन्ति । अयः । वसु ।
यत् । एतत् । अस्मान् । भोजय । यथा । इत् । अन्यान् । उपऽअयसि ॥ ६ ॥
उषसे । नः । परि । देहि । सर्वान् । रात्रि । अनागसः ।
उषाः । नः । अह्ने । आ । भजात् । अहः । तुभ्यम् । विभावरि ॥ ७ ॥

**XIX.50.2** O night, with those sharp-horned, fast-running bullocks, that are yours, may you, today and on all days, bear us across all difficulties.

**XIX.50.3** May we get across each and every night with our body uninjured. May our enemies not get across, like boatless person in deep waters.

**XIX.50.4** Just as a millet-seed, flying up and blown away, is not traced out, so, O night, may you blow him away, whoso plans to harm us.

**XIX.50.5** Keep the thief away from (our) house; also the robber of cows and goats; also him, who wants to lead away (our) horse haltering his head.

**XIX.50.6** O night, possessor of great fortunes, as you have come today dealing out riches, make us to enjoy all that, so that this may not go to others.

**XIX.50.7** O night, may you hand over all of us to the dawn free from sin; may the dawn deliver us to the day; and the day to you, O glowing one.

( ५१ ) एकपञ्चाशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । (१) प्रथमर्च आत्मा, (२) द्वितीयायाश्च सविता देवते । (१) प्रथमाया एकावसाना ब्राह्म्यनुष्टुप्, (२) द्वितीयायाश्चैकावसाना त्रिपदा यवमध्योष्णिक् छन्दसी ॥

अयुतोहमयुतो म आत्मायुतं मे चक्षुरयुतं मे श्रोत्रमयुतो मे
प्राणोयुतो मेपानोयुतो मे व्यानोयुतोहं सर्वः ॥१॥
देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रसूत आ रभे ॥२॥

अयुतः । अहम् । अयुतः । मे । आत्मा । अयुतम् । मे । चक्षुः । अयुतम् । मे । श्रोत्रम् । अयुतः । मे । प्राणः । अयुतः । मे । अपानः । अयुतः । मे । विऽआनः । अयुतः । अहम् । सर्वः ॥ १ ॥

देवस्य । त्वा । सवितुः । प्रऽसवे । अश्विनोः । बाहुऽभ्याम् । पूष्णः । हस्ताभ्याम् । प्रऽसूतः । आ । रभे ॥ २ ॥

( ५२ ) द्विपञ्चाशं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । कामो देवता । (१-२, ४) प्रथमाद्वितीयाचतुर्थीनामृचां त्रिष्टुप्, (३) तृतीयायाश्चतुष्पदोष्णिक्, (५) पञ्चम्याश्चोपरिष्टाद्बृहती छन्दांसि ॥

कामस्तदग्रे समवर्तत मनसो रेतः प्रथमं यदासीत् ।
स काम कामेन बृहता सयोनी रायस्पोषं यजमानाय धेहि ॥१॥
त्वं काम सहसासि प्रतिष्ठितो विभुर्विभावा सख आ सखीयते ।
त्वमुग्रः पृतनासु सासहिः सह ओजो यजमानाय धेहि ॥२॥
दूराच्चकमानाय प्रतिपाणायाक्षये । आस्मा अशृण्वन्नाशाः कामेनाजनयन्त्स्वः ॥३॥

कामः । तत् । अग्रे । सम् । अवर्तत । मनसः । रेतः । प्रथमम् । यत् । आसीत् । सः । काम । कामेन । बृहता । सऽयोनिः । रायः । पोषम् । यजमानाय । धेहि ॥ १ ॥

त्वम् । काम । सहसा । असि । प्रतिऽस्थितः । विऽभुः । विभाऽवा । सखे । आ । सखीयते । त्वम् । उग्रः । पृतनासु । ससहिः । सहः । ओजः । यजमानाय । धेहि ॥ २ ॥

दूरात् । चकमानाय । प्रतिऽपानाय । अक्षये ।
आ । अस्मै । अशृण्वन् । आशाः । कामेन । अजनयन् । स्वः ॥ ३ ॥

## Ātman

**XIX.51.1** Unbound am I; unbound is my soul; unbound (is) my vision; unbound (is) my audition; unbound (is) my in-breath; unbound (is) my out-breath; unbound (is) my diffused breath; unbound the whole of me.

## Savita

**XIX.51.2** At the impulsion of the divine impeller Lord, urged by the arms of the twins divine and by the hands of the nourisher Lord, I undertake (this work).

## Kāma : Desire

**XIX.52.1** In the beginning arose that desire, which was the first seed of the mind. As such, may you, O desire, akin to the providential desire, grant plenty of riches to the sacrificer.

**XIX.52.2** O desire, you are well established by (your) overpowering might, pervasive and majestic, a friend to one seeking friendship, you are fierce, overwhelming in battles; may you bestow vigour on the sacrificer.

**XIX.52.3** To him, who from a long distance longed for an inexhaustible response, all the quarters listened, and with desire they produced bliss.

कामेन मा काम आगन्हृदयाद्धृदयं परि । यदमीषामदो मनस्तदैतूप मामिह ॥४॥
यत्काम कामयमाना इदं कृण्मसि ते हविः ।
तन्नः सर्वं समृध्यतामथैतस्य हविषो वीहि स्वाहा ॥५॥

कामेन । मा । कामः । आ । अगन् । हृदयात् । हृदयम् । परि ।
यत् । अमीषाम् । अदः । मनः । तत् । आ । एतु । उप । माम् । इह ॥४॥
यत् । काम । कामयमानाः । इदम् । कृण्मसि । ते । हविः । तत् । नः । सर्वम् ।
सम् । ऋध्यताम् । अथ । एतस्य । हविषः । वीहि । स्वाहा ॥ ५ ॥

( ५३ ) त्रिपञ्चाशं सूक्तम्

(१-१०) दशर्चस्यास्य सूक्तस्य भृगुर्ऋषिः । सर्वात्मकः कालो देवता । (१-४) प्रथमादिचतुर्ऋचां त्रिष्टुप्, (५) पञ्चम्या निचृत्पुरस्ताद्बृहती, (६-१०) षष्ठ्यादिपञ्चानाञ्चानुष्टुप् छन्दांसि ॥

कालो अश्वो वहति सप्तरश्मिः सहस्राक्षो अजरो भूरिरेताः ।
तमा रोहन्ति कवयो विपश्चितस्तस्य चक्रा भुवनानि विश्वा ॥१॥
सप्त चक्रान्वहति काल एष सप्तास्य नाभीरमृतं न्वक्षः ।
स इमा विश्वा भुवनान्यञ्जत्कालः स ईयते प्रथमो नु देवः ॥२॥
पूर्णः कुम्भोधि काल आहितस्तं वै पश्यामो बहुधा नु सन्तः ।
स इमा विश्वा भुवनानि प्रत्यङ्कालं तमाहुः परमे व्योमिन् ॥३॥

कालः । अश्वः । वहति । सप्तऽरश्मिः । सहस्रऽअक्षः । अजरः । भूरिऽरेताः ।
तम् । आ । रोहन्ति । कवयः । विपःऽचितः । तस्य । चक्रा । भुवनानि । विश्वा ॥१॥
सप्त । चक्रान् । वहति । कालः । एषः । सप्त । अस्य । नाभीः । अमृतम् । नु । अक्षः ।
सः । इमा । विश्वा । भुवनानि । अञ्जत् । कालः । सः । ईयते । प्रथमः । नु । देवः ॥२॥
पूर्णः । कुम्भः । अधि । काले । आऽहितः । तम् । वै । पश्यामः । बहुऽधा । नु । सन्तम् ।
सः । इमा । विश्वा । भुवनानि । प्रत्यङ् । कालम् ! तम् । आहुः । परमे । विऽओमन् ॥ ३ ॥

**XIX.52.4** By desire, the desire has come to me, from heart to heart. Whatever be the mind of those yonder ones, may that come to me here.

**XIX.52.5** O desire, desiring whatsoever we make the offering to you, may all that be accomplished for us. Now may you enjoy this offering. Svāhā.

## Kāla : Time

**XIX.53.1** Time, the seven-reigned horse, thousand-eyed unaging and prolific, draws (the Cosmic Chariot). Sages with keen vision mount it; all the beings are it wheels.

**XIX.53.2** This Time (horse) draws the seven wheels; seven are its naves; verily, the immortality is the axle. Making all the beings manifest, Time, the destroyer (sah), moves on. He is the primal deity.

**XIX.53.3** The overflowing vessel is set upon Time. Indeed, we see him taking on various forms. He is face to face with all these beings. They call him kāla (time) in the highest heaven.

स एव सं भुवनान्याभरत्स एव सं भुवनानि पर्यैत् ।
पिता सन्नभवत्पुत्र एषां तस्माद्वै नान्यत्परमस्ति तेजः ॥४॥
कालोमूं दिवमजनयत्काल इमाः पृथिवीरुत ।
काले ह भूतं भव्यं चेषितं ह वि तिष्ठते ॥५॥
कालो भूतिमसृजत काले तपति सूर्यः ।
काले ह विश्वा भूतानि काले चक्षुर्वि पश्यति ॥६॥
काले मनः काले प्राणः काले नाम समाहितम् ।
कालेन सर्वा नन्दन्त्यागतेन प्रजा इमाः ॥७॥
काले तपः काले ज्येष्ठं काले ब्रह्म समाहितम् ।
कालो ह सर्वस्येश्वरो यः पितासीत्प्रजापतेः ॥८॥
तेनेषितं तेन जातं तदु तस्मिन्प्रतिष्ठितम् ।
कालो ह ब्रह्म भूत्वा बिभर्ति परमेष्ठिनम् ॥९॥

सः । एव । सम् । भुवनानि । आ । अभरत् । सः । एव । सम् । भुवनानि । परि । ऐत् ।
पिता । सन् । अभवत् । पुत्रः । एषाम् । तस्मात् । वै । न । अन्यत् । परम् । अस्ति । तेजः ॥
कालः । अमूम् । दिवम् । अजनयत् । कालः । इमाः । पृथिवीः । उत ।
काले । ह । भूतम् । भव्यम् । च । इषितम् । ह । वि । तिष्ठते ॥ ५ ॥
कालः । भूतिम् । असृजत । काले । तपति । सूर्यः ।
काले । ह । विश्वा । भूतानि । काले । चक्षुः । वि । पश्यति ॥ ६ ॥
काले । मनः । काले । प्राणः । काले । नाम । सम्ऽआहितम् ।
कालेन । सर्वाः । नन्दन्ति । आऽगतेन । प्रऽजाः । इमाः ॥ ७ ॥
काले । तपः । काले । ज्येष्ठम् । काले । ब्रह्म । सम्ऽआहितम् ।
कालः । ह । सर्वस्य । ईश्वरः । यः । पिता । आसीत् । प्रजाऽपतेः ॥ ८ ॥
तेन । इषितम् । तेन । जातम् । तत् । ऊं इति । तस्मिन् । प्रतिऽस्थितम् ।
कालः । ह । ब्रह्म । भूत्वा । बिभर्ति । परमेऽस्थिनम् ॥ ९ ॥

**XIX.53.4** He alone sustains the beings completely. He alone pervades the beings thoroughly. Being father, He becomes their son. Surely, there is no other majesty superior to Him.

**XIX.53.5** Time has created that heaven; Time has created these earths as well. In Time, indeed, is located all that has existed and that will ever exist stirred (by Time).

**XIX.53.6** Time has generated the earth; the sun burns in Time. In Time, indeed, are located all the beings; in Time the vision discerns.

**XIX.53.7** In Time mind, in Time life, in Time name is well set. By Time, when it comes, all these creations rejoice.

**XIX.53.8** In Time fervour, in Time the great observer, the highest knowledge is well set. Time is the Lord of all; father of the Lord of creatures is He.

**XIX.53.9** Urged by Him, created by Him, all that is set, surely, within Him. Time, becoming the Divine supreme, sustains the Lord seated in the highest abode.

कालः प्रजा असृजत कालो अग्रे प्रजापतिम् ।
स्वयंभूः कश्यपः कालात्तपः कालादजायत ॥१०॥

कालः । प्रऽजाः । असृजत । कालः । अग्रे । प्रजाऽपतिम् ।
स्वयम्ऽभूः । कश्यपः । कालात् । तपः । कालात् । अजायत ॥ १० ॥

( ५४ ) चतुष्पञ्चाशं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्य भृगुर्ऋषिः । सर्वात्मकः कालो देवता । (१, ३-४) प्रथमातृतीयाचतुर्थीनामृचामनुष्टुप्, (२) द्वितीयायास्त्रिपदार्षी गायत्री, (५) पञ्चम्याश्च त्र्यवसाना षट्पदा विराडष्टिश्छन्दांसि ॥

कालादापः समभवन्कालाद्ब्रह्म तपो दिशः ।
कालेनोदेति सूर्यः काले नि विशते पुनः ॥१॥
कालेन वातः पवते कालेन पृथिवी मही ।
द्यौर्मही काल आहिता ॥२॥
कालो ह भूतं भव्यं च पुत्रो अजनयत्पुरा ।
कालादृचः समभवन्यजुः कालादजायत ॥३॥
कालो यज्ञं समैरयद्देवेभ्यो भागमक्षितम् ।
काले गन्धर्वाप्सरसः काले लोकाः प्रतिष्ठिताः ॥४॥

कालात् । आपः । सम् । अभवन् । कालात् । ब्रह्म । तपः । दिशः ।
कालेन । उत् । एति । सूर्यः । काले । नि । विशते । पुनः ॥ १ ॥

कालेन । वातः । पवते । कालेन । पृथिवी । मही ।
द्यौः । मही । काले । आऽहिता ॥ २ ॥

कालः । ह । भूतम् । भव्यम् । च । पुत्रः । अजनयत् । पुरा ।
कालात् । ऋचः । सम् । अभवन् । यजुः । कालात् । अजायत ॥ ३ ॥

कालः । यज्ञम् । सम् । ऐरयत् । देवेभ्यः । भागम् । अक्षितम् ।
काले । गन्धर्वऽअप्सरसः । काले । लोकाः । प्रतिऽस्थिताः ॥ ४ ॥

**XIX.53.10** Time has created the creatures; in the beginning, Time created the Lord of creatures. The self-existent seer (Kasyapa) is born from Time; from Time fervour is born.

## In Praise of Kāla

**XIX.54.1** From Time the waters are born; from Time the sacred knowledge, fervour, and the quarters. The sun rises by Time; in Time he enters again.

**XIX.54.2** By Time the wind blows afresh; by Time mighty is the earth. The sky is great, being set in Time.

**XIX.54.3** By Time, the son (of Time; Prajāpati) created past, present and future in ancient times. The Rks (praise-verses) are born from Time; from Time is born the Yajuh (sacrificial text).

**XIX.54.4** Time has set in motion the sacrifice,unexhausting share of the enlightened ones. Protectors of earth and the energies of water (are set) in Time; in Time are set the worlds.

कालेयमङ्गिरा देवोऽथर्वा चाधि तिष्ठतः ।
इमं च लोकं परमं च लोकं पुण्यांश्च लोकान्विधृतीश्च पुण्याः ।
सर्वांल्लोकानभिजित्य ब्रह्मणा कालः स ईयते परमो नु देवः ॥५॥

काले । अयम् । अङ्गिराः । देवः । अथर्वा । च । अधि । तिष्ठतः । इमम् । च ।
लोकम् । परमम् । च । लोकम् । पुण्यान् । च । लोकान् । विऽधृतीः । च । पुण्याः ।
सर्वान् । लोकान् । अभिऽजित्य । ब्रह्मणा । कालः । सः । ईयते । परमः । नु । देवः ॥ ५ ॥

## ( ५५ ) पञ्चपञ्चाशं सूक्तम्

(१-६) षड्ऋचस्यास्य सूक्तस्य भृगुर्ऋषिः । अग्निर्देवता । (१, ३-४) प्रथमातृतीयाचतुर्थीनामृचां त्रिष्टुप्, (२) द्वितीयाया आस्तारपङ्क्तिः, (५) पञ्चम्यास्त्र्यवसाना पञ्चपदा पुरस्ताज्ज्योतिष्मती त्रिष्टुप्, (६) षष्ठ्याश्च निचृद्बृहती छन्दांसि ॥

रात्रिंरात्रिमप्रयातं भरन्तोऽश्वायेव तिष्ठते घासमस्मै ।
रायस्पोषेण समिषा मदन्तो मा ते अग्ने प्रतिवेशा रिषाम ॥१॥
या ते वसोर्वात इषुः सा त एषा तया नो मृड ।
रायस्पोषेण समिषा मदन्तो मा ते अग्ने प्रतिवेशा रिषाम ॥२॥
सायंसायं गृहपतिर्नो अग्निः प्रातःप्रातः सौमनसस्य दाता ।
वसोर्वसोर्वसुदान एधि वयं त्वेन्धानास्तन्वं पुषेम ॥३॥
प्रातःप्रातर्गृहपतिर्नो अग्निः सायंसायं सौमनसस्य दाता ।
वसोर्वसोर्वसुदान एधीन्धानास्त्वा शतंहिमा ऋधेम ॥४॥

रात्रिम्ऽरात्रिम् । अप्रऽयातम् । भरन्तः । अश्वायऽइव । तिष्ठते । घासम् । अस्मै ।
रायः । पोषेण । सम् । इषा । मदन्तः । मा । ते । अग्ने । प्रतिऽवेशाः । रिषाम ॥ १ ॥
या । ते । वसोः । वातः । इषुः । सा । ते । एषा । तया । नः । मृड ।
रायः । पोषेण । सम् । इषा । मदन्तः । मा । ते । अग्ने । प्रतिऽवेशाः । रिषाम ॥ २ ॥
सायम्ऽसायम् । गृहऽपतिः । नः । अग्निः । प्रातःऽप्रातः । सौमनसस्य । दाता ।
वसोःऽवसोः । वसुऽदानः । एधि । वयम् । त्वा । इन्धानाः । तन्वम् । पुषेम ॥ ३ ॥
प्रातःऽप्रातः । गृहऽपतिः । नः । अग्निः । सायम्ऽसायम् । सौमनसस्य । दाता ।
वसोःऽवसोः । वसुऽदानः । एधि । इन्धानाः । त्वा । शतम्ऽहिमाः । ऋधेम ॥ ४ ॥

**XIX.54.5** In Time this divine brilliant (Añgiras), and this unflinching (Atharvan) stand fast. Conquering this world, and the highest world, and the holy worlds and holy midspaces, and all the worlds by the sacred knowledge, that Time is approached as the highest Lord.

## To Agni

**XIX.55.1** Night after night, without any break, bringing offering to him, as if fodder to a stabled horse, delighting in plenty of riches along with food, O adorable Lord, may we, your neighbors, never come to harm.

**XIX.55.2** Whatever is your power of providing dwelling and that of providing food, that, surely, is yours. May you favour us with the same; delighting in plenty of riches along with food, O adorable Lord, may we, your neighbors, never come to harm.

**XIX.55.3** Each and every evening, may there be the house-holder's fire for us; each and every morning, may he be the bestower of happiness. May you be the bestower of each and every wealth on us. Enkindled you, may we nourish our progeny (tanvam).

**XIX.55.4** Each and every morning, may there be the house-holder's fire for us; each and every evening, may he be the bestower of happiness on us. May you be the bestower of each and every wealth on us. Enkindling you, may we prosper through a hundred winters.

अपश्वा दुग्धान्नस्य भूयासम् । अन्नादायान्नपतये रुद्राय नमो अग्नये ।
सभ्यः सभां मे पाहि ये च सभ्याः सभासदः ॥५॥
त्वमिन्द्रा पुरुहूत विश्वमायुर्व्यश्नवत् ।
अहरहर्बलिमित्ते हरन्तोश्वायेव तिष्ठते घासमग्ने ॥६॥

अपश्वा । दुग्धऽअन्नस्य । भूयासम् । अन्नऽअदाय । अन्नऽपतये । रुद्राय । नमः ।
अग्नये । सभ्यः । सभाम् । मे । पाहि । ये । च । सभ्याः । सभाऽसदः ॥ ५ ॥
त्वम् । इन्द्र । पुरुऽहूत । विश्वम् । आयुः । वि । अश्नवत् ।
अहःऽअहः । बलिम् । इत् । ते । हरन्तः । अश्वायऽइव । तिष्ठते । घासम् । अग्ने ॥

( ५६ ) षट्पञ्चाशं सूक्तम्

(१-६) षडृचस्यास्य सूक्तस्य यम ऋषिः । दुःस्वप्नो देवता । त्रिष्टुप् छन्दः ॥

यमस्य लोकादध्या बभूविथ प्रमदा मर्त्यान्प्र युनक्षि धीरः ।
एकाकिना सरथं यासि विद्वान्त्स्वप्नं मिमानो असुरस्य योनौ ॥१॥
बन्धस्त्वाग्रे विश्वचया अपश्यत्पुरा रात्र्या जनितोरेके अह्नि ।
ततः स्वप्नेदमध्या बभूविथ भिषग्भ्यो रूपमपगूहमानः ॥२॥
बृहद्गावासुरेभ्योधि देवानुपावर्तत महिमानमिच्छन् ।
तस्मै स्वप्नाय दधुराधिपत्यं त्रयस्त्रिंशासः स्वरानशानाः ॥३॥

यमस्य । लोकात् । अधि । आ । बभूविथ । प्रऽमदा । मर्त्यान् । प्र । युनक्षि । धीरः ।
एकाकिना । सऽरथम् । यासि । विद्वान् । स्वप्नम् । मिमानः । असुरस्य । योनौ ॥ १ ॥
बन्धः । त्वा । अग्रे । विश्वऽचयाः । अपश्यत् । पुरा । रात्र्याः । जनितोः । एके । अह्नि ।
ततः । स्वप्न । इदम् । अधि । आ । बभूविथ । भिषक्ऽभ्यः । रूपम् । अपऽगूहमानः ॥
बृहत्ऽगावा । असुरेभ्यः । अधि । देवान् । उप । अवर्तत । महिमानम् । इच्छन् ।
तस्मै । स्वप्नाय । दधुः । आधिऽपत्यम् । त्रयःऽत्रिंशासः । स्वः । आनशानाः ॥ ३ ॥

**XIX.55.5** May I be one, never having burnt food in the back part of my plate. Homage be to the adorable Lord, the consumer of food, the lord of food, the terrible punisher. May you, the courteous one, protect my court, as well as the courteous one, protect my court, as well as the courteous courtiers.

**XIX.55.6** O resplendent one, invoked by the multitude, make us attain our full life-span, day after day, only to you, bringing our tribute, just as fodder to a stabled horse, O adorable Lord.

## Svapna : Dream

**XIX.56.1** From the world of the controller Lord you have come. Self-possessed, you unite mortals with pleasure. Fashioning dream in the abode of the life-enjoyer, knowing full well, you go on a common chariot with the lonely person.

**XIX.56.2** First of all, the almighty Bond beheld you one day before the night was created. O dream, thence you have come here concealing your form from the leeches.

**XIX.56.3** Like a huger stone, desirous of greatness, from the life-destroyers he crossed over to the enlightened ones. To that dream, the thirty-three enlightened ones, dwelling in the world of light, granted the supreme domination.

नैतां विदुः पितरो नोत देवा येषां जल्पिश्चरत्यन्तरेदम् ।
त्रिते स्वप्नमदधुराप्त्ये नर आदित्यासो वरुणेनानुशिष्टाः ॥४॥
यस्य क्रूरमभजन्त दुष्कृतोऽस्वप्नेन सुकृतः पुण्यमायुः ।
स्वर्मदसि परमेण बन्धुना तप्यमानस्य मनसोऽधि जज्ञिषे ॥५॥
विद्म ते सर्वाः परिजाः पुरस्ताद्विद्म स्वप्न यो अधिपा इहा ते ।
यशस्विनो नो यशसेह पाह्याराद्द्विषेभिरप याहि दूरम् ॥६॥

न । एताम् । विदुः । पितरः । न । उत । देवाः । येषाम् । जल्पिः । चरति । अन्तरा । इदम् ।
त्रिते । स्वप्नम् । अदधुः । आप्त्ये । नरः । आदित्यासः । वरुणेन । अनुऽशिष्टाः ॥ ४ ॥

यस्य । क्रूरम् । अभजन्त । दुःऽकृतः । अस्वप्नेन । सुऽकृतः । पुण्यम् । आयुः ।
स्वः । मदसि । परमेण । बन्धुना । तप्यमानस्य । मनसः । अधि । जज्ञिषे ॥ ५ ॥

विद्म । ते । सर्वाः । परिऽजाः । पुरस्तात् । विद्म । स्वप्न । यः । अधिऽपाः । इह । ते ।
यशस्विनः । नः । यशसा । इह । पाहि । आरात् । द्विषेभिः । अप । याहि । दूरम् ॥ ६ ॥

( ५७ ) सप्तपञ्चाशं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्य यम ऋषिः । दुःस्वप्नो देवता । (१) प्रथमर्चोऽनुष्टुप्, (२) द्वितीयायास्त्रिपदा त्रिष्टुप्, (३) तृतीयायास्त्र्यवसाना त्रिष्टुप्, (४) चतुर्थ्याः षट्पदोष्णिग्बृहतीगर्भा विराट् शाक्वरी, (५) पञ्चम्याश्च त्र्यवसाना पञ्चपदा परशाक्वरातिजगती छन्दांसि ॥

यथा कलां यथा शफं यथर्णं संनयन्ति । एवा दुष्वप्न्यं सर्वमप्रिये सं नयामसि ॥१॥
सं राजानो अगुः समृणान्यगुः सं कुष्ठा अगुः सं कला अगुः ।
समस्मासु यद्दुःष्वप्न्यं निर्द्विषते दुष्वप्न्यं सुवाम ॥२॥

यथा । कलाम् । यथा । शफम् । यथा । ऋणम् । सम्ऽनयन्ति ।
एव । दुःऽस्वप्न्यम् । सर्वम् । अप्रिये । सम् । नयामसि ॥ १ ॥

सम् । राजानः । अगुः । सम् । ऋणानि । अगुः । सम् । कुष्ठाः । अगुः । सम् । कलाः ।
अगुः । सम् । अस्मासु । यत् । दुःऽस्वप्न्यम् । निः । द्विषते । दुःऽस्वप्न्यम् । सुवाम ॥ २ ॥

**XIX.56.4** The, elders know it not, nor the enlightened ones, whose muttering goes on within it. Instructed by the venerable Lord, the old sages have put dream into the man with three-fold suffering.

**XIX.56.5** Whose cruelty the evil-doers share; and persons of good actions enjoy a holy life free from bad dreams. With your closest kin, You revel in the world of bliss. You are born from the mind of a sufferer.

**XIX.56.6** We know all your attendant that go before you; we know, O dream, who is your overlord here. May you protect us, the glorious ones, with glory here; go far away along with the malicious ones.

**Against evil-dreaming**

**XIX.57.1** Just as they (pay back) one sixteenth part, as one eighth part and as they pay back the (whole) debt, so we carry all the bad dream to the unpleasant enemy.

**XIX.57.2** Kings are well gone away; debts are well gone away; leprosies are well gone away; interests on capital (kala) are well gone away. Whatever bad dream has accumulated within us, that bad dream we send out to him, who hates us.

देवानां पत्नीनां गर्भ यमस्य कर यो भद्रः स्वप्न ।
स मम यः पापस्तद्द्विषते प्र हिण्मः । मा तृष्टा नामासि कृष्णशकुनेर्मुखम् ॥३॥
तं त्वा स्वप्न तथा सं विद्म स त्वं स्वप्नाश्व इव कायमश्व इव नीनाहम् ।
अनास्माकं देवपीयुं पियारुं वप यदस्मासु दुष्वप्न्यं यद्गोषु यच्च नो गृहे ॥४॥
अनास्माकस्तद्देवपीयुः पियारुर्निष्कमिव प्रति मुञ्चताम् ।
नवारत्नीनपमया अस्माकं ततः परि ।
दुष्वप्न्यं सर्वं द्विषते निर्दयामसि ॥५॥

देवानाम् । पत्नीनाम् । गर्भ । यमस्य । कर । यः । भद्रः । स्वप्न । सः । मम । यः ।
पापः । तत् । द्विषते । प्र । हिण्मः । मा । तृष्टानाम् । असि । कृष्णऽशकुनेः । मुखम् ॥ ३ ॥

तम् । त्वा । स्वप्न । तथा । सम् । विद्म । सः । त्वम् । स्वप्न । अश्वःऽइव । कायम् ।
अश्वःऽइव । नीनाहम् । अनास्माकम् । देवऽपीयुम् । पियारुम् । वप । यत् । अस्मासु ।
दुःऽस्वप्न्यम् । यत् । गोषु । यत् । च । नः । गृहे ॥ ४ ॥

अनास्माकः । तत् । देवऽपीयुः । पियारुः । निष्कम्ऽइव । प्रति । मुञ्चताम् । नव ।
अरत्नीन् । अपऽमयाः । अस्माकम् । ततः । परि । दुःऽस्वप्न्यम् । सर्वम् । द्विषते । निः । दयामसि ॥

## ( ५८ ) अष्टपञ्चाशं सूक्तम्

(१-६) षड्ऋचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । यज्ञो मन्त्रोक्ता वा देवताः । (१, ४) प्रथमाचतुर्थ्योर्ऋचोस्त्रिष्टुप् , (२) द्वितीयायाः पुरोऽनुष्टुप्त्रिष्टुप् , (३) तृतीयायाश्चतुष्पदातिशाक्वरी, (५) पञ्चम्या भुरिक्त्रिष्टुप् , (६) षष्ठयाश्च जगती छन्दांसि ॥

घृतस्य जूतिः समनाः सदेवाः संवत्सरं हविषा वर्धयन्ती ।
श्रोत्रं चक्षुः प्राणोऽच्छिन्नो नो अस्त्वच्छिन्ना वयमायुषो वर्चसः ॥१॥
उपास्मान्प्राणो ह्वयतामुप वयं प्राणं हवामहे ।
वर्चो जग्राह पृथिव्य१न्तरिक्षं वर्चः सोमो बृहस्पतिर्विधत्ता ॥२॥

घृतस्य । जूतिः । सऽमना । सऽदेवा । सम्ऽवत्सरम् । हविषा । वर्धयन्ती ।
श्रोत्रम् । चक्षुः । प्राणः । अच्छिन्नः । नः । अस्तु । अच्छिन्नाः । वयम् । आयुषः । वर्चसः ॥१॥

उप । अस्मान् । प्राणः । ह्वयताम् । उप । वयम् । प्राणम् । हवामहे ।
वर्चः । जग्राह । पृथिवी । अन्तरिक्षम् । वर्चः । सोमः । बृहस्पतिः । विऽधत्ता ॥ २ ॥

**XIX.57.3** O child of the divine protecting powers, O hand of the controlling Lord, O dream, whatever is benign, may that be mine; what is evil, that we send away to the malicious enemy. May you not be the mouth of the black bird (crow) for the sufferers.

**XIX.57.4** You as such we know well, O dream. May you, O dream, like a horse his halter, like a horse his girth, throw off the bad dream that is within us, within our cows, and within our homes on him, who is not one of us, is a reviler of the enlightened ones and a mocker.

**XIX.57.5** May he, who is not one of us, is a reviler of the enlightened ones and a mocker, wear that like a golden necklace. May the bad dream get nine cubits away from us - even farther than that. All the bad dreams we do send out to the malicious enemy.

### To Various Gods : for Blessings

**XIX.58.1** May there be always (sadaiva) a constant (samanā) flow of clarified butter, augmenting the year with sacrificial oblations. May our audition, vision and vital breath unimpaired; may we remain unsevered from long life.

**XIX.58.2** May the vital breath invoke us; we invoke the vital breath. The earth has gathered splendour, so the midspace; the blissful Lord, the Lord supreme and the sustainer Lord (is) full of splendour.

वर्चसो द्यावापृथिवी संग्रहणी बभूवथुर्वर्चो गृहीत्वा पृथिवीमनु सं चरेम ।
यशसा गावो गोपतिमुप तिष्ठन्त्यायतीर्यशो गृहीत्वा पृथिवीमनु सं चरेम ॥३॥
व्रजं कृणुध्वं स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि ।
पुरः कृणुध्वमायसीरधृष्टा मा वः सुस्रोच्चमसो दृंहता तम् ॥४॥
यज्ञस्य चक्षुः प्रभृतिर्मुखं च वाचा श्रोत्रेण मनसा जुहोमि ।
इमं यज्ञं विततं विश्वकर्मणा देवा यन्तु सुमनस्यमानाः ॥५॥
ये देवानामृत्विजो ये च यज्ञिया येभ्यो हव्यं क्रियते भागधेयम् ।
इमं यज्ञं सह पत्नीभिरेत्य यावन्तो देवास्तविषा मादयन्ताम् ॥६॥

वर्चसः । द्यावापृथिवी इति । संग्रहणी इति सम्ऽग्रहणी । बभूवथुः । वर्चः । गृहीत्वा । पृथिवीम् । अनु । सम् । चरेम । यशसम् । गावः । गोऽपतिम् । उप । तिष्ठन्ति । आऽयतीः । यशः । गृहीत्वा । पृथिवीम् । अनु । सम् । चरेम ॥ ३ ॥

व्रजम् । कृणुध्वम् । सः । हि । वः । नृऽपानः । वर्म । सीव्यध्वम् । बहुला । पृथूनि । पुरः । कृणुध्वम् । आयसीः । अधृष्टाः । मा । वः । सुस्रोत् । चमसः । दृंहत । तम् ॥४॥

यज्ञस्य । चक्षुः । प्रऽभृतिः । मुखम् । च । वाचा । श्रोत्रेण । मनसा । जुहोमि । इमम् । यज्ञम् । विऽततम् । विश्वऽकर्मणा । आ । देवाः । यन्तु । सुऽमनस्यमानाः ॥ ५ ॥

ये । देवानाम् । ऋत्विजः । ये । च । यज्ञियाः । येभ्यः । हव्यम् । क्रियते । भागऽधेयम् । इमम् । यज्ञम् । सह । पत्नीभिः । आऽइत्य । यावन्तः । देवाः । तविषाः । मादयन्ताम् ॥ ६ ॥

( ५९ ) एकोनषष्टितमं सूक्तम्

(१–३) तृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । अग्निर्देवता । (१) प्रथमर्चो गायत्री, (२–३) द्वितीयातृतीययोश्च त्रिष्टुप् छन्दसी ॥

त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः ॥१॥

त्वम् । अग्ने । व्रतऽपाः । असि । देवः । आ । मर्त्येषु । आ । त्वम् । यज्ञेषु । ईड्यः ॥१॥

**XIX.58.3** The heaven and earth have become gatherers of splendour. Possessing splendour, may we move about on earth. The cows come and wait upon the glorious master of cows. Possessing glory, may we move about on earth.

**XIX.58.4** Construct the cow-stall, for that is the drinking place of your leaders (of your men), fabricate armour, manifold and ample. Make cities of iron strong and impregnable; let not your ladle leak; make it strong and unbreakable.

**XIX.58.5** The sacrifice's eye, commencement, and face; with voice, hearing, mind I make oblation, To this sacrifice, extended by Viśvakarmān, let the gods come, well-willing.

**XIX.58.6** Those who are the priests of the enlightened ones, and who deserve honour, and for whom a share of sacrifical oblations is allotted, may all those enlighted ones, along with their wives, comes to this sacrifice and revel in the food offered.

### For successful sacrifice

**XIX.59.1** O adorable, you are divine amongst the mortal men, and preserver of their sacred deeds. Therefore, we worship you in every benevolent task. (Rk.VIII.11.1)

यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः ।
अग्निष्टद्विश्वादा पृणातु विद्वान्त्सोमस्य यो ब्राह्मणाँ आविवेश ॥२॥
आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनुप्रवोढुम् ।
अग्निर्विद्वान्त्स यजात्स इद्धोता सोऽध्वरान्त्स ऋतून्कल्पयाति ॥३॥

यत् । वः । वयम् । प्रऽमिनाम । व्रतानि । विदुषाम् । देवाः । अविदुःऽतरासः । अग्निः ।
तत् । विश्वऽअत् । आ । पृणातु । विद्वान् । सोमस्य । यः । ब्राह्मणान् । आऽविवेश ॥ २ ॥
आ । देवानाम् । अपि । पन्थाम् । अगन्म । यत् । शक्नवाम । तत् । अनुऽप्रवोढुम् ।
अग्निः । विद्वान् । सः । यजात् । सः । इत् । होता । सः । अध्वरान् । सः । ऋतून् । कल्पयाति ॥

( ६० ) षष्टितमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । मन्त्रोक्ता वागादयो देवताः । (१) प्रथमर्चः पथ्याबृहती,
(२) द्वितीयायाश्च ककुम्मती पुर उष्णिक् छन्दसी ॥

वाङ्म आस्यन्नसोः प्राणश्चक्षुरक्ष्णोः श्रोत्रं कर्णयोः ।
अपलिताः केशा अशोणा दन्ता बहु बाह्वोर्बलम् ॥१॥
ऊर्वोरोजो जङ्घयोर्जवः पादयोः प्रतिष्ठा । अरिष्टानि मे सर्वात्मानिभृष्टः ॥२॥

वाक् । मे । आसन् । नसोः । प्राणः । चक्षुः । अक्ष्णोः । श्रोत्रम् । कर्णयोः ।
अपलिताः । केशाः । अशोणाः । दन्ताः । बहु । बाह्वोः । बलम् ॥ १ ॥
ऊर्वोः । ओजः । जङ्घयोः । जवः । पादयोः ।
प्रतिऽस्था । अरिष्टानि । मे । सर्वा । आत्मा । अनिऽभृष्टः ॥ २ ॥

( ६१ ) एकषष्टितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । ब्रह्मणस्पतिर्देवता । विराट्पथ्याबृहती छन्दः ॥

तनूस्तन्वा मे सहे दतः सर्वमायुरशीय ।
स्योनं मे सीद पुरुः पृणस्व पवमानः स्वर्गे ॥१॥

तनूः । तन्वा । मे । सहे । दतः । सर्वम् । आयुः । अशीय ।
स्योनम् । मे । सीद । पुरुः । पृणस्व । पवमानः । स्वःऽगे ॥ १ ॥

**XIX.59.2** O divine forces, being ignorant of Nature's laws, if we show negligence in the works assigned to us, may the all-wise fire divine, compensate it fully on his own accord by providing well-timed seasons, through which he regulateds the functions of the cosmic forces. (Rg.X.24.Var.)

**XIX.59.3** May we pursue the path of enlightened ones and accomplish all that we are capable of; may that wise fire divine become our inspirer; verily, he is the main source of inspiration in all our beneficial acts; may He guide us to accomplish all benevolent acts, performed at proper seasons. (Rg.X.23.Var.)

### For physical abilities

**XIX.60.1** (May there be) speech in my, vital breath in nostrils, vision in two eyes, audition in two ears; hair not turned grey, teeth undecayed, and abundant strength in my two arms.

**XIX.60.2** (May there be) vigour in my two thighs, speed in my two legs, steadiness in my two feet, all my organs unimpaired and my self ever - unsubdued.

### For long life

**XIX.61.1** May my body be fit. I shall overpower the foes. May I attain my full length of life. Be seated happily for me. Bestow plenty (on me), purifying in the realm of bliss.

( ६२ ) द्विषष्टितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । ब्रह्मणस्पतिर्देवता । अनुष्टुप् छन्दः ॥

प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु ।
प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये ॥१॥

प्रियम् । मा । कृणु । देवेषु । प्रियम् । राजऽसु । मा । कृणु ।
प्रियम् । सर्वस्य । पश्यतः । उत । शूद्रे । उत । आर्ये ॥ १ ॥

( ६३ ) त्रिषष्टितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । ब्रह्मणस्पतिर्देवता । विराडुपरिष्टाद्बृहती छन्दः ॥

उत्तिष्ठ ब्रह्मणस्पते देवान्यज्ञेन बोधय ।
आयुः प्राणं प्रजां पशुं कीर्तिं यजमानं च वर्धय ॥१॥

उत् । तिष्ठ । ब्रह्मणः । पते । देवान् । यज्ञेन । बोधय ।
आयुः । प्राणम् । प्रऽजाम् । पशून् । कीर्तिम् । यजमानम् । च । वर्धय ॥ १ ॥

( ६४ ) चतुःषष्टितमं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । अग्निर्देवता । अनुष्टुप् छन्दः ॥

अग्ने समिधमाहार्षं बृहते जातवेदसे । स मे श्रद्धां च मेधां च जातवेदाः प्र यच्छतु ॥१॥
इध्मेन त्वा जातवेदः समिधा वर्धयामसि । तथा त्वमस्मान्वर्धय प्रजया च धनेन च ॥२॥
यदग्ने यानि कानि चिदा ते दारूणि दध्मसि । सर्वं तदस्तु मे शिवं तज्जुषस्व यविष्ठ्य ॥३॥

अग्ने । सम्ऽइधम् । आ । अहार्षम् । बृहते । जातऽवेदसे ।
सः । मे । श्रद्धाम् । च । मेधाम् । च । जातऽवेदाः । प्र । यच्छतु ॥ १ ॥
इध्मेन । त्वा । जातऽवेदः । सम्ऽइधा । वर्धयामसि ।
तथा । त्वम् । अस्मान् । वर्धय । प्रऽजया । च । धनेन । च ॥ २ ॥
यत् । अग्ने । यानि । कानि । चित् । आ । ते । दारूणि । दध्मसि ।
सर्वम् । तत् । अस्तु । मे । शिवम् । तत् । जुषस्व । यविष्ठ्य ॥ ३ ॥

### For popularity

**XIX.62.1** May you make me pleasing among the enlightened ones; make me pleasing among the ruling authorities. May I be pleasing to all who observe, whether workers or the elite.

### To Bṛhaspati

**XIX.63.1** Get up, O Lord of knowledge; awaken the enlightened ones with the sacrifice. Increase our life-span, vital breath, progeny, cattle, and fame as well as the sacrificer.

### To Agni : with fuel

**XIX.64.1** O adorable Lord, I have brought fuel-wood for the great cognizant of all. May that cognizant of all grant me faith and intelligence (wisdom).

**XIX.64.2** O cognizant of all, I augment you with the quick-burning firewood. So, may you make us prosper with progeny and wealth.

**XIX.64.3** O fire-divine, whatever pieces of firewood we bring and place for you, O young one, may you enjoy that. May all this be propitious for me.

**एतास्ते अग्ने समिधस्त्वमिद्धः समिद्भव । आयुरस्मासु धेह्यमृतत्वमाचार्याय ॥४॥**

एताः । ते । अग्ने । समऽइधः । त्वम् । इद्धः । समऽइत् । भव ।
आयुः । अस्मासु । धेहि । अमृतऽत्वम् । आऽचार्याय ॥ ४ ॥

( ६५ ) पञ्चषष्टितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । जातवेदाः सूर्यो देवता । जगती छन्दः ॥

**हरिः सुपर्णो दिवमारुहोर्चिषा ये त्वा दिप्सन्ति दिवमुत्पतन्तम् ।
अव तां जहि हरसा जातवेदोबिभ्यदुग्रोर्चिषा दिवमा रोह सूर्य ॥१॥**

हरिः । सुऽपर्णः । दिवम् । आ । अरुहः । अर्चिषा । ये । त्वा । दिप्सन्ति । दिवम् ।
उत्ऽपतन्तम् । अव । तान् । जहि । हरसा । जातऽवेदः । अबिभ्यत् । उग्रः । अर्चिषा । दिवम् ।
आ । रोह । सूर्य ॥ १ ॥

( ६६ ) षट्षष्टितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । जातवेदाः सूर्यो वज्रश्च देवते । अतिजगती छन्दः ॥

**अयोजाला असुरा मायिनोयस्मयैः पाशैरङ्किनो ये चरन्ति ।
तांस्ते रन्धयामि हरसा जातवेदः सहस्रभृष्टिः सपत्नान्प्रमृणन्पाहि वज्रः ॥१॥**

अयःऽजालाः । असुराः । मायिनः । अयस्मयैः । पाशैः । अङ्किनः । ये । चरन्ति ।
तान् । ते । रन्धयामि । हरसा । जातऽवेदः । सहस्रऽऋष्टिः । सऽपत्नान् । प्रऽमृणन् ।
पाहि । वज्रः ॥ १ ॥

( ६७ ) सप्तषष्टितमं सूक्तम्

(१-८) अष्टर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । सूर्यो देवता । प्राजापत्या गायत्री छन्दः ॥

**पश्येम शरदः शतम् ॥१॥ जीवेम शरदः शतम् ॥२॥**

पश्येम । शरदः । शतम् ॥ १ ॥

जीवेम । शरदः । शतम् ॥ २ ॥

**XIX.64.4** O fire-divine, these are your fuel-sticks. Kindled up, may you become lustrous. May you set long life in us and grant immortality to (our) preceptor.

### Praise of the Sun

**XIX.65.1** Remover (of gloom), one of beautiful rays, the sun has ascended to heaven with his glow. Whoever obstructs you in flying up to the sky, may you smite them down with your flame, without fear, O cognizant of all. O sun, being fierce, may you ascend to the sky.

### To Agni

**XIX.66.1** Those life-destroyers, tricky fellows, who move about with iron-nets and with hooks and bonds made of iron, them subdue with your flame, O cognizant of all beings. May you go about crushing our rivals like a thousand-pointed bolt.

### For long life and prosperity

**XIX.67.1** Through a hundred autumns may we see.

**XIX.67.2** Through a hundred autumns may we live.

बुध्येम शरदः शतम् ॥३॥ रोहेम शरदः शतम् ॥४॥
पूषेम शरदः शतम् ॥५॥ भवेम शरदः शतम् ॥६॥
भूयेम शरदः शतम् ॥७॥ भूयसीः शरदः शतात् ॥८॥

बुध्येम । शरदः । शतम् ॥ ३ ॥

रोहेम । शरदः । शतम् ॥ ४ ॥

पूषेम । शरदः । शतम् ॥ ५ ॥

भवेम । शरदः । शतम् ॥ ६ ॥

भूषेम । शरदः । शतम् ॥ ७ ॥

भूयसीः । शरदः । शतात् ॥ ८ ॥

( ६८ ) अष्टषष्टितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । कर्म देवता । अनुष्टुप् छन्दः ॥

अव्यसश्च व्यचसश्च बिलं वि ष्यामि मायया । ताभ्यामुद्धृत्य वेदमथ कर्माणि कृण्महे ॥१॥

अव्यसः । च । व्यचसः । च । बिलम् । वि । स्यामि । मायया ।
ताभ्याम् । उत्ऽहृत्य । वेदम् । अथ । कर्माणि । कृण्महे ॥ १ ॥

( ६९ ) एकोनसप्ततितमं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । आपो देवताः । (१) प्रथमर्च आसुर्यनुष्टुप्, (२) द्वितीयायाः साम्न्यनुष्टुप्, (३) तृतीयाया आसुरी गायत्री, (४) चतुर्थ्याश्च साम्न्युष्णिक् छन्दांसि ॥

जीवा स्थ जीव्यासं सर्वमायुर्जीव्यासम् ॥१॥

जीवाः । स्थ । जीव्यासम् । सर्वम् । आयुः । जीव्यासम् ॥ १ ॥

**XIX.67.3** Through a hundred autumns may we recognize.

**XIX.67.4** Through a hundred autumns may we ascend

**XIX.67.5** Through a hundred autumns may we thrive.

**XIX.67.6** Through a hundred autumns may we arise.

**XIX.67.7** Through a hundred autumns may we prosper.

**XIX.67.8** For more than a hundred autumns.

## Ceremonial performance

**XIX.68.1** Into the openings of non-existing as well as of far-extending, I enter with (my) skill. Lifting up the sacred knowledge from these two, thereafter we proceed with the sacred actions (acts).

## To the waters : for long life

**XIX.69.1** You are life-giving; may I live; may I live my full term of life.

उपजीवा स्थोप जीव्यासं सर्वमायुर्जीव्यासम् ॥२॥
संजीवा स्थ सं जीव्यासं सर्वमायुर्जीव्यासम् ॥३॥
जीवला स्थ जीव्यासं सर्वमायुर्जीव्यासम् ॥४॥

उपऽजीवाः । स्थ । उप । जीव्यासम् । सर्वम् । आयुः । जीव्यासम् ॥ २ ॥

सम्ऽजीवाः । स्थ । सम् । जीव्यासम् । सर्वम् । आयुः । जीव्यासम् ॥ ३ ॥

जीवलाः । स्थ । जीव्यासम् । सर्वम् । आयुः । जीव्यासम् ॥ ४ ॥

( ७० ) सप्ततितमं सूक्तम्
(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । सूर्यादयो देवताः । त्रिपदा गायत्री छन्दः ॥

इन्द्र जीव सूर्य जीव देवा जीवा जीव्यासमहम् । सर्वमायुर्जीव्यासम् ॥१॥

इन्द्र । जीव । सूर्य । जीव । देवाः । जीवाः । जीव्यासम् । अहम् । सर्वम् । आयुः । जीव्यासम् ॥

( ७१ ) एकसप्ततितमं सूक्तम्
(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । गायत्री देवता । त्र्यवसाना पञ्चपदातिजगती छन्दः ॥

स्तुता मया वरदा वेदमाता प्र चोदयन्तां पावमानी द्विजानाम् ।
आयुः प्राणं प्रजां पशुं कीर्तिं द्रविणं ब्रह्मवर्चसम् । मह्यं दत्त्वा व्रजत ब्रह्मलोकम् ॥१॥

स्तुता । मया । वरदा । वेदऽमाता । प्र । चोदयन्ताम् । पावमानी । द्विजानाम् ।
आयुः । प्राणम् । प्रऽजाम् । पशुम् । कीर्तिम् । द्रविणम् । ब्रह्मऽवर्चसम् ।
मह्यम् । दत्त्वा । व्रजत । ब्रह्मऽलोकम् ॥ १ ॥

( ७२ ) द्विसप्ततितमं सूक्तम्
(१) एकर्चस्यास्य सूक्तस्य भृग्वङ्गिरा ब्रह्मा ऋषिः । परमात्मा सर्वे देवाश्च देवताः । त्रिष्टुप् छन्दः ॥

यस्मात्कोशादुदभराम वेदं तस्मिन्नन्तरव दध्म एनम् ।
कृतमिष्टं ब्रह्मणो वीर्येण तेन मा देवास्तपसावतेह ॥१॥

यस्मात् । कोशात् । उत्ऽअभराम । वेदम् । तस्मिन् । अन्तः । अव । दध्मः । एनम् ।
कृतम् । इष्टम् । ब्रह्मणः । वीर्येण । तेन । मा । देवाः । तपसा । अवत । इह ॥ १ ॥

॥ इत्येकोनविंशं काण्डम् ॥
[ सूक्तानि ७२, ऋचः ४५३ ]

**XIX.69.2** You are subsistence; may I subsist; may I live my full term of life.

**XIX.69.3** You are purposeful life; may I live purposefully; may live my full term of life.

**XIX.69.4** You are animating; may I live; may I live my full term of life.

### For long life

**XIX.70.1** Live, O resplendent One; live, O Sun; live, O bounties of Nature. May I live. May I live my full term of life.

### For Blessings

**XIX.71.1** The boon-giving veda-mother is praised by the intellectual persons. Bestowing on me ling life, vital breath, progeny, cattle, glory, material prosperity and intellectual lustre, may she go to the world of the Divine Supreme.

### For God's favour

**XIX.72.1** From which treasury, we had lifted up the Veda (sacred knowledge), therein we now deposit it. Desirable deed has been performed with the power of the Divine supreme. May the bounties of Nature protect me here with that fervour.

---

**Here ends Kanda XIX**
**Hymns 72, Verses 453**

---